• श्रीश्रीमालीयखरटङ्कशालाहतत्रिःपरीक्षितहट्टव्यवहरमाणजीर्णविश्वमल्लप्रियद्र० २४०४ चतुरधिकचतुर्विंशतिशतानि द्रम्मा गृहीताः । व्याजेन मासं शतं प्रति२ चटन्ति । एते द्रम्माः सां० दीपोत्सवे निर्विवादाः कलिकाकलिरहिताः अष्टप्रहरे ऽर्थधारिणकेन व्यवहारकस्य देशान्तरगतस्यापि एकमुष्ट्या प्रवेशनीयाः । यदि व्यवहारको ग्रामे न भवति ततो धारिणकेन एकधनस्य तद्भ्रातुः तत्सुतस्य वा गृहोदुम्बरमध्ये समानीय द्रम्माः प्रवेशनीयाः । अथ चेद्दायकग्राहकयोर्मध्ये दैववशात् एको म्रियते नश्यति कस्यापि दैवविहितं किमप्यनिष्टं दुर्निमित्तमुत्पद्यते, ततस्तयोः पुत्रपौत्रैरपि द्रम्माः पत्रप्रमाणेन देयाः । जल्पितदिनैः यदा धारणिक एकमुष्ट्या सव्याजकान् द्रम्मान् व्यवहारकाय न ददाति एकमुष्ट्या समग्रद्रम्मान न प्रवेशयन्ति तदा कियद्भिः प्रवेशितद्रम्मैर्लिखितपत्रविधिना अपूर्यमाणशाकमानद्रम्मा व्यवहारकेण आधौ मुक्तउपरिलिखितवस्तूनि शाकपणिकान्यायेन धारणिकप्रतिभुवां विदितं विक्रीय द्रम्मा ग्रहीतव्याः । कदापि मुक्ताधिवस्तुभिरपि पत्राङ्किताः सव्याजकाः सोपक्षया द्रम्मा न पूर्यंते तदनु प्रतिभूभिः अन्यव्यवहारकात् व्याजेनाकर्ष्य अथवा स्वगृहादात्मीयं वस्तु विक्रीय व्यवहारकस्य सव्याजकाः द्रम्मा दातव्याः । धारणिकेन प्रतिभूभिश्च व्यवहारकसमं वादविवादो राजकुले न कार्यः । जातविवादे संजातोपक्षयो हीनवादिभिः सर्वोऽपि सहनीयः । अथ मुक्ताधिवस्तूनां मध्यात् कथ्यापि वस्तुनो दैवायत्तं दुर्निमित्तमनिष्टं किञ्चिदपि जायते, अग्निदाहेन चौराद्युपद्रवेन अतिजलपातेन विनाशः स्यात् , ततोऽपि धारणिकप्रतिभुवो व्यवहारकस्य पत्रप्रमाणेन समस्तसोपक्षयव्याजकद्रम्मैः प्रविष्टैः उच्छृंखलाः जायन्ते । इहार्थे विनष्टाधिसक्तकरनाकन्दलं व्यवहारकसमं न कार्यम् । अथ कदापि व्यवहारकस्य उत्पन्नस्वीय.. कार्यवशात् द्रम्मैः हस्तप्राप्तैः प्रयोजनं जायते, ततो व्यवहारकेण धारणिकप्रतिभुव आक्रम्य भट्टपुत्रानुपवेश्य सव्याजद्रम्मा ग्राह्याः । इहार्थे विहितभट्टपुत्राणां य उपक्षयो व्रजति स समग्रोऽपि धारणिकप्रतिभूभिश्च सर्वोऽपि निर्वहणीयः । अस्योपरिलिखितविधेः पालनाय सव्याजकसोपक्षयद्रम्माणां लिखितपत्रविधिप्रमाणेन दावापनाय आधौ मुक्तवस्तूनां योगक्षेमनिर्वहणाय अपरसमस्तग्राहकाचारेण स्वयं ग्रहीतारौ इव प्रतिभुवौ व्यवहारकसमं समग्रनिर्वाहं कुरुतः । यथा बहवः प्रतिभुवो भवन्ति तथा एकेन सर्वे सर्वैरपि एकः सङ्कलिता एव निर्वाहं कुर्वन्ति । धुरप्रतिभुवोरन्तरं नावगन्तव्यम् । प्राप्तेनैकेनापरेषामुत्तरमकुर्वतां व्यवहारकसमं लिखितपत्रविधिद्रम्माणां सव्याजकानां सोपक्षयानां धनिकवत् समग्रनिर्वाहो विधातव्यः । प्रतिभूभिरात्मानं धा-

रणिकं भणित्वा मनसि कल्पनीयम् । अत्रार्थे रावां परित्यज्य प्रतिभुवा-माचारं केवलं च विधाय आधिपालकप्रतिभूभिर्व्यवहारकस्य पत्रप्रमाणेन सो-पक्षयसव्याजकद्रम्माणां निर्गमः कार्यः । इहार्थे अमुकामुकग्रामीयअमुकामु-कज्ञातीयअमुकामुकनामानश्चत्वार आधिपालाः। तेषां स्वहस्तेन दत्तमतानि ॥ तथा धारणिकस्वहस्तेन प्रदत्तमतम् । तथा अधिवाससत्कीया अमुकज्ञाती-या अमुकनामानश्च पञ्च साक्षिणश्च । लिखितमिदं पत्रं उभयाऽभ्यर्थितेन पार-थीजयताकेन । हीनाक्षरमधिकाक्षरं च पत्रं प्रमाणमिति ॥

## वृद्धिधान्याक्षराणि—

A संवत् १२८८ वैषाख शुदि १५ गुरावद्येह श्रीपत्तने यथासन्तिष्ठमान-राजावलीपूर्वं सवृद्धिधान्यपत्रमभिलिख्यते यथा । धनिको नाम नामतः इहैव वास्तव्यश्रीमालज्ञातीयवाणि० पाताको लाभाय स्वधनं प्रयुङ्क्ते । अस्य च हस्ता-द्धारणिको नाम नामतः संखारीग्रामीयनागरज्ञातीय वा० पदमासुत वा० म-हिपाको गोधूममाणि २० विंशतिः अङ्कतोऽप्युद्धारे गृह्णाति । तदेते गोधूमाः स-पादिकाः वर्द्धमाना खलकान्ते सञ्जातधान्यराशेर्वातोपनीतमृत्तिकाचिवडांररहिता अक्षता रजोहीना ज्येष्ठीपूर्णिमां निरुद्ध्य अयाचिताः कलिकालवलिकउचटरहि-ता निर्विवादा राजभागाद्दत्तानन्तरं तत्कालमेव खलकादथ गृहायाताः प्रथमज्ये-ष्ठपूर्णिमादिसत्कीया भव्या निजशकटे कृत्वा वृद्धिसमं व्यवहारकपातागृहे यथागृहीतप्राप्त्येन वा०महिपाकेनानीय प्रवेशनीयाः । यदि सां० ज्येष्ठान्ताद-र्वाक् सवृद्धिगोधूमान् वा० महिपाको न प्रवेशयति तदा धान्याचारेण देशा-चारेण च भव्यानां गोधूमानां वर्तमानमूल्यद्रम्मान् ददाति महिपाकः ॥ इहार्थे लिखितसमस्तपत्रविधिनिर्वाहणाय अमुकग्रामीयअमुकज्ञातीयअमुकनामानौ द्वौ दावापितप्रतिभुवौ । एकेन द्वौ द्वाभ्यामेकः । एकेन हस्तप्राप्तेन द्वितीयेन उत्तर-मकुर्वता धारणिकवत् लिखितपत्रार्थः समग्रोऽपि व्यवहारकसमं निर्वाहयितव्यः इहार्थे धारणिकप्रतिभुवोः स्वहस्तेन समीपस्थअमुकामुकमुख्यसाक्षिपञ्चक-विदितं प्रदत्तमतानि । उभयाभ्यर्थनेन लिखितमिदं पत्रं पारथीजयताकेन । हीनाक्षरमधिकाक्षरं वा प्रमाणम् ।

## दिव्यं यथा—

फालं कोशो घटश्चैव घटसर्पो जलं तथा ।
षष्ठं च तन्दुलैर्दिव्यं सप्तमस्तसमाषकः ॥
फालदिव्यं महारौद्रं प्रक्षिप्तं च करांजलौ ।

दहस्वैनं च पापिष्ठमपापे शीतलं भव ॥
त्वमग्ने ! सर्वभूतानामन्तश्चरसि नित्यशः ।
साक्षिवत् पुण्यपापानां ब्रूहि सत्यं च पावक ! ॥
इति फालाधिवासना ।
त्वं तोय ! प्राणिनां प्राणाः सृष्टेरादौ विनिर्मिताः ।
शुद्धं धारय मामग्रे अशुद्धं चेत्प्रकाशय ॥
इति कोषाधिवासना ।
त्वं तुले सत्यवक्तासि पुरा देवैर्विनिर्मिता ।
यत्सत्यं वद कल्याणि ! संशयान् मां विमोचय ।
शुद्धोऽहं चेदधो गच्छ अशुद्धश्चेदूर्ध्वगा भव ॥
इति तुलाधिवासना ।
वासुकेः कुलसंभूत भगवन् उरग ! संशृणु ।
शुद्धस्य पुष्पमालेवाशुद्धश्चेदन्तको भव ॥
इति घटसर्पाधिवासना ।
धर्मपापावलोकाय गोलकौ जलमाश्रितौ ।
अशुद्धस्य चटेत् रूप्यः शुद्धस्य हेमजश्चटेत् ॥
इति गोलकजलाधिवासना ।
तन्दुला सिद्धशंखाभा वक्त्रात् सत्यप्रभावतः ।
महिषीक्षीरसंकाशा जायन्ते शुद्धचेतसः ॥
चर्विता रक्तसंकाशा जायन्तेऽशुद्धचेतसः ।
इति तन्दुलाधिवासना ।
परं पवित्रममृतं घृतं त्वं यज्ञकर्मणि ।
परं सुराणामाहारः परं पावनमुच्यसे ।
त्वमग्ने ! सर्वभूतानामन्तश्चरसि पावक ! ।
दह त्वं पापकर्माणः शुद्धानां शीतलो भव ।
इति तप्तमाषाधिवासना ।
दिव्यं सप्तविधं प्रोक्तं यथायोग्यतया बुधैः ।
दिव्याधिवासना पूर्वं कर्तव्या देवसन्निधौ ।
एतानि सप्त दिव्यानि यथा प्रोक्तानि भूतले ।
क्रमेणैतानि सर्वाणि मया चोक्तानि धीमताम् ।

तुलायां नाधमो योज्यः स्त्रीणां फालं विवर्जयेत्।
न कोशं श्लेष्मले देयं तसमाषश्च कुष्ठिनः।
विषं च सर्वतो वर्ज्यं सद्यःप्राणहरं च यत्।
कुष्ठिते वह्निजं नास्ति एतद्दिव्यस्य लक्षणम्।
न बालानां नातिवृद्धानां न स्त्रीणां दिव्यमर्हति।
षण्ढानां च न दातव्यं व्याधितानां विशेषतः।
जयश्च काप्यशुद्धानां शुद्धानां च पराभवः
दिव्यं देयं परं भाव्यं दिव्या दिव्यगतिर्भवेत्।

## डोहलिकामुक्तिर्यथा—

I A संवत् १२८८ वर्षे वैशाखशुदि १५ सोमे अद्येह श्रीमदणहिल्लपाटके यथासन्तिष्ठमानराजावलीपूर्वं धर्माधिकरणे श्रीमहामात्यआलिगविदितं डोहलिकाभूमीमुक्तिपत्रिका लिख्यते यथा। यत् मोढेरामहास्थानस्थदुवेबलाइतेन श्रीधर्माधिकरणे उपविश्य पण्डितानामग्रे चिरन्तनलोकानां प्रदत्तसाक्षिवादेन श्रीकरणविदितं स्वकीयां भूमिं निःसन्देहां विधाय डोहलिकाभूमेः व्यापेधः कारितः। अत ऊर्द्धमस्य विप्रस्य वहमानभूमेः केनाऽपि राजवर्गीयमानुषेण प्रतिबन्धो न कार्य इति। मतं श्रीः प्रमाणम्।

II B संवत् १२८८ वर्षे वैशाखशुदि १५ सोमे अद्येह श्रीमदणहिल्लपाटके महाराजाधिराजश्रीभीमदेवाधिष्ठितधर्माधिकरणीयदेवताः श्रीश्रीकरणादिमहामात्यश्रीअमुकनिमित्तं द्विवेदब्राह्मणअमुकाकस्य डोहलिकायां पत्रिकां प्रयच्छन्ति। अमुकग्रामीयब्राह्मणअमुकाकस्य श्रीधर्माधिकरणे उपविश्य धर्माधिकरणीयपण्डितानामग्रे चिरन्तनलोकैः प्रदत्तसाक्षिवादे श्रीकरणविदितं स्वकीयां भूमिं कृत्वा लुप्तडोहलिकाया व्यापेधः कारितः। अत ऊर्द्धमस्य ब्राह्मणस्य वहमानभूमिव्यापेधः केनापि न कार्य इति। मतं श्रीः॥

## व्यापेधो यथा—

I A स्वस्ति। श्रीमहामात्यश्रीआलिगवचनात् मुहुडासापथकेऽधि० विक्रमसिंहो बोधयति यथा। बोद्धव्यमिदम्॥ यत्तत्र स्वपथके समस्तप्रसादसाचित्तग्रामेषु व्यापेधः कार्यः। संवत् १२८८ वर्षे वैशाखशुदि १५ गुरौ। मतं श्रीः

II B स्वस्ति। महं०श्रीश्रीकरणादेशात् अमुकग्रामे राजकीयनिबद्धराजपुत्राणां लिख्यते यथा। यत् श्रीराजादेशात् राणावीरमदेवस्य ग्रामेषु व्यापेधः सञ्जातोऽस्ति। तस्य दानीभोगादि सर्वं यथा पूर्वरीत्या ग्रहणाय दत्तम्। भवद्भिर्नि-

जभागं गृहीत्वा उत्थाय गन्तव्यम् । ग्वश्चा काऽपि कार्या । संवत् १२८८ वर्षे वैशाखशुदि १५ गुरौ । मतं श्रीः प्रमाणमिति ।

*III B* **स्वस्ति । श्रीमहामात्यश्रीअमुकाकवचनादमुकपथकेऽधि० अमुकाकं बोधयति यथा । बोद्धव्यमिदम् । यत्त्वया स्वपथके स्वप्रसादग्रामेषु व्यापेधः कार्यः । संवत् १२८८ वर्षे वैशाख शुदि १५ सोमे । मतं श्रीः ॥**

## अथवा व्यापेधो यथा—

I A **महामात्यश्रीआलिगवचनात् अरल्लूआपथके अधि० नागडं बोधयति यथा ॥ बोद्धव्यमिदम् । यदसिदण्डप्रहारेषु राणो नागो न संप्राप्तः । अथ राजादेशेन एतस्य ग्रामो व्यापेधनीयः । संवत् १२८८ वैशाखशुदि १५ ।**

II B **स्वस्ति । महामात्यश्रीअमुकाकवचनादमुकपथके अधि० अमुकाकं बोधयति यथा । बोद्धव्यमिदम् । परमारराज०अमुकाकः श्रीमद्विजयकटके न प्रविष्टः । अतो राजादेशेन एतदीयग्रामो व्यापेधनीयः इति । मतं श्रीः ॥**

## ग्रासलोपनं यथा—

I A **स्वस्ति । श्रीमहामात्यश्रीआलिगवचनात् दण्डाहीपथके विजयसिंहं बोधयति यथा । अमुकयुद्धे राजा नागपालो नायातः । प्रणश्य ययौ । तदस्य ग्रामाः सञ्जात्यां कर्त्तव्याः । समस्तग्रामेष्वायपदग्रहणार्थं स्वीयमानुषाः नियोजनीयाः ॥ संवत् १२८८ वर्षे वैशाखशुदि १५ गुरौ । मतं श्रीः प्रमाणम् ।**

II B **स्वस्ति । श्रीमहामात्यश्रीअमुकाकवचनादधि० अमुकाकं [illegible]यति यथा ॥ अमुकराज्ञा सह युद्धे सञ्जायमाने राजा अमुकाको नष्टः । ततः [illegible]राजादेशेन एतदीयग्रामा राजसञ्जात्यां कर्तव्याः । सर्वग्रामेष्वात्मीयमानुषाः प्रस्थापनीयाः ॥ संवत् १२८८ वर्षे वैशाखशुदि १५ सोमे । मतं श्रीः ॥**

## विशुद्ध्यक्षराणि यथा—

I A **संवत् १२८८ वर्षे वैशाखशुदि १५ सोमेऽद्येह श्रीमत्पत्तने महामात्यश्रीआलिगः पट्ट० अरडकस्य विशुद्ध्यक्षराणि प्रयच्छति यथा ॥ पट्ट० अरडकेन समस्तग्रामपट्टकेषु श्रावण्याद्यं आषाढीनिरूढं पट्टकद्रम्मास्तथा मलमार्गणकमाङ्गलीयकचतुरकशतिनादिसमस्तपदेषु पदकविशुद्ध्या देशरीत्या द्रम्माः प्रवेशिताः श्रीकरणे उपगताः । मतं श्रीः प्रमाणम् ॥**

II B **संवत् १२८८ वर्षे वैशाखशुदि १५ सोमेऽद्येह श्रीमत्पत्तने महामात्यश्रीअमुकाकः पट्ट० अमुकाकस्य विशुद्ध्यक्षराणि प्रयच्छति यथा ॥ पट्ट०**

अमुकाकेन समस्तपट्टकपदेषु श्रावण्यार्ग्घं आषाढनिरुद्धं समस्तपट्टकद्रम्माश्चतुरकपतितमलमार्गणादिसमं विशुद्धाः सप्रतिष्ठाः प्रवेशिता इति। मतं श्रीः ॥

## उपगता यथा—

I A संवत् १२८८ वर्षे वैशाखशुदि १५ गुरावद्येह श्रीपत्तने महामात्यश्रीआलिगपश्चकुलं अधि० वीजडस्य उपगतां प्रयच्छति यथा। अधि० बीजडेन भण्डारीनरसिंहस्य पोतके प्रवेशितद्रम्माः ५००० पञ्चसहस्रम् । मतं श्रीः ।

II B संवत् १२८८ वर्षे वैशाखशुदि १५ सोमेऽद्येह श्रीमत्पत्तने महामात्यअमुकाको अधि० अमुकाकस्य प्रयच्छत्युपगतां यथा । अधि० अमुकाकेनामुकपोत्तकेसंप्रवेशित द्र० ५००० पञ्चसहस्राणि । हस्त० भां० अमुकाकमतं । श्रीः ॥

## मण्डलकरणस्य उपगता यथा—

A सं० १३६६ वर्षे वैशाख शुदि ३ गुरावद्येह मण्डलकरणे सीतापुरग्रामीणसंघवीहीराकस्य उपगतां प्रयच्छति यथा । यत् ग्रामस्यास्य पट्टकसम्बन्धे भण्डारीमेधाकस्य संघवीहीराकेन प्रवेशित रौक्यद्र ४००० चत्वारि सहस्राणि द्रम्माः प्रवेशिताः ॥ साभिज्ञानं भण्डारीमतं श्रीकरणाभिज्ञानं च प्रमाणम् ॥

## कण–उपगता यथा—

C संवत् १५३३ वर्षे ज्येष्ठशुदि ८ भौमे अद्येह अमुककोष्ठागारे मह० अमुकाकप्रभृति पञ्चकुलं उपगतां प्रयच्छति यथा । अमुकग्रामखलिकाकीर्ता अमुकाकः मह० अमुकाकप्रभृतिपञ्चकुलेन प्रवेशित अमुकमापेन चणा मूडा ४० चत्वारिंशत् चणासत्कमूटकाः प्रवेशिताः । मतम् ॥

## ठेको यथा—

I A स्वस्ति । महामात्यश्रीआलिगवचनात् माण्डलिकपथकेऽधि० खेतसिंहं बोधयति यथा । बोद्धव्यमिदम् । महामण्डलेश्वरराणावीरमदेवग्रामेषु व्यापेधः कार्यः । विकरे द्र० १६, लिगा द्र० ६, धूपा द्र० १४, दर्शने द्र० ८, एवं द्र० ४४ । स्वस्ति संवत् १२८८ वर्षे वैशाखशुदि १५ गुरौ । मतं । श्रीः प्रमाणम् ॥

II B स्वस्ति । महामात्यश्रीअमुकाकवचनादमुकपथकेऽधि० अमुकाकं बोधयति यथा । बोद्धव्यमिदम् । महामात्यश्रीअमुकाकस्य महामण्डलेश्वरराजअमुकाकस्य ग्रामेषु व्यापेधः कार्यः । विकरे द्र० १६ लिङ्गा द्र० ६ धूपा द्र०

१४ दर्शने द्र० ८ एवं द्र० ४४ । स्वस्ति । संवत् १२८८ वर्षे वैशाखशुदि १५ सोमे मतं । श्रीः ॥

## सन्धिविग्रहो यथा—

I A स्वस्ति । श्रीमुहुडासानिवासितश्रीमद्विजयकटकात् राउलश्रीवाघपादानामादेशात् अणघुरे राणाश्रीजयताकस्य सान्धिविग्रहिकं सादरं बोधयति यथा । बोद्धव्यमिदम् । श्रेयोऽत्र श्रीमदस्माकं सौराज्ये अवबु स्वचिते परमप्रमोदं विचिन्त्य निजनाथकल्याणवतीभिः किंवदन्तीभिः यमजस्रमानन्दनीयाः । कार्यं च । यत् श्रीमदस्माकं महागर्ग्रीयदण्डा नेना सह विग्रहः सञ्जातोऽस्ति । अतः साधनसहस्रैकं नीत्वा श्रीअस्माकं ोकारग्रहे समग्रजयनशालासामग्रीसहितं सत्वरं प्रहेयम् । यथा प्रहितवानि र्ग निजस्वामिनो हृदयङ्गमः कार्यः । संवत् १३०९ ज्येष्ठशुदि १५ गुरौ । श्रीस्वयमादेशः ।

II B स्वस्त्यमुकस्थाने समवस्थितश्रीमद्विजयकटकात् महाम श्वरराणकअमुकाकसत्कसान्धिविग्रहिकं बोधयति यथा । बोद्धव्यमिदम् कुशलमत्रास्माकमिति स्वमनसि प्रमोदं विधाय विजयकाय विग्रहः समु ोऽस्ति इति मत्वा साधनसहस्रमेकं प्रतिग्रहे मुत्कलनीयम् । कार्यादिकं सदैव ज्ञाप्यमित्ययमर्थः स्वप्रभोर्हृदयङ्गमः कार्यं इति । संवत् १२८८ वर्षे वैशा दि १५ सोमे । दृयके स्वयमादेशः ।

## लिखितं यथा—

B स्वस्त्यमुकस्थानाद्राज० अमुकाको अमुकस्थाने भ्रातृअमुकाकं सादरं सोत्कण्ठं गाढमालिङ्ग्य कुशलं वार्त्तयति यथा । कुशलमत्रोति स्वमनसि प्रमोदमाधाय तत्रत्यकुशलवती किंवदन्त्यनुदिनं प्रहेया । कार्यादिकं सदैव समाख्याप्यमिति ।

## लेखो यथा—

I B स्वस्ति । लाटापल्ल्यां महं० अमुकाकोऽमुकग्रामेऽमुकं समादिशति यथा । आदेष्टव्यमिदम् । तस्मिन् ग्रामे मिलितपोत्तकद्रम्माः सर्वेऽत्र प्रविष्टाः कार्याः । कार्यादिकं सदैव विज्ञाप्यमिति । मतं श्रीः ॥

II A स्वस्ति । श्रीचाडातः राणाश्रीरासिलपादानामादेशात् ओडाग्रामे प्रती० रासिलस्य सप्रसादं समादिश्यते यथा । आदेष्टव्यमदः । यत् दृष्टादेशेन

स्वीयविलहणासक्तघोटमानुषान् नीत्वा समग्रजयनशालासमं आतरसुम्बके राजश्रीजयतर्णमेलापके चाडायां समागन्तव्यम् । श्रीवयमपि बहुमेलापकं विधाय प्रभाते राजश्रीजयतकर्णचाडायां प्रचलिष्यामः । सं० १३६५ वैशाखशुदि १५ गुरौ । श्रीस्वयमादेशः प्रमाणम् ।

## वधूहेतो राजलेखः—

स्वस्ति । मुहुडासानगरात् राउश्रीवाघदेवः अणघुरे कुमारश्रीनरसिंहदेवपत्नीं चन्द्राउलीनाम्नीं सप्रसादं सस्नेहं समादिशति यथा । आदेष्टव्यमिदम् । यावत् कुमारनरसिंहः श्रीकटकात् समेति तावत्समस्तपरिग्रहस्य महं० जयतापार्श्वात् कणभक्तकानि दृष्टप्रत्ययानि दावाप्यानि कोष्ठागारात् । तथा राजवर्गीयदासीदीकोलाकर्मकरप्रभृतीनां यथापूर्वमादिष्टा भूर्जाई (?) काराप्या । पोष्यवर्गस्य भोजनाच्छादनादिचिन्ता सर्वेषां वरा कार्या । अन्यच्च यात्रोत्सवे श्रीराजकुलात् क्वापि बाह्ये न गन्तव्यम् । परपुरुषदर्शनं परगृहगमनं च नैव विधातव्यम् । विशेषोत्पन्नराजकार्यं सदैव श्रीअस्माकं विज्ञापयितव्यम् । संवत् १४३२ वैशाखशु० १५ गुरौ । श्रीस्वयमादेशः प्रमाणम् ।

## स्वरूपविधिः—

स्वस्ति । श्रीपत्तनात् महं० जयताकः श्रीघोघावेलाकूले परमसुहृदं महं० विजयसिंहं परमप्रीतिपरेण सोत्कण्ठं गाढमालिङ्ग्य सप्रश्रयं वार्तयति यथा । वार्तव्यमिदम् । कुशलमिह स्वीयसमस्तकुटुम्बेष्ववगम्य भवता निजकुटुम्बारोग्यतया तथा यथास्थित्या स्वीयव्यापारस्थितस्वरूपेण च निरन्तरमहमानन्दनीयः । कार्यं च यत्साम्प्रतीनसमायातहुर्मजीवाहने कीदृशी वस्तु तथा तेजी घोटकाश्च कियन्तः समायाताः तत्स्वरूपं सुव्यक्तं लिखित्वा प्रहेयम् । तथा मदधिकृतं कार्यं सदैव सन्देशनीयम् । माघशुदि १५ गुरौ ।

## श्रीराजविज्ञप्तिका यथा—

A स्वस्ति । श्रीमदुज्जयिन्यां समवस्थितश्रीमद्विजयकटके पूज्यपरमाराध्यतमोत्तमपरमपूजार्चनीयान्, उमापतिवरलब्धप्रौढप्रतापसंशोषितारातिवनदहनान्, दुर्दान्तवैरिमदमर्दनचण्डशक्तीन्, प्रचण्डशात्रवराज्यलक्ष्मीस्वयंवरान्, सदोदितप्रतापान्, वैरिनिवहदुर्निरीक्षान्, प्रत्यर्थिक्षितिपालमौलिवलभीविन्यस्तपादाम्बुजान्, रिपुमण्डलीनिर्दहने भीमभयङ्करान्, षट्त्रिंशद्दण्डायुधादियोधविद्यानिपुणान्, अरिभूपगजघटानिर्दलने सिंहप्रायान्, वैरिपृष्ठदानचि-

मुखान् , सदाजयश्रीरक्षणरतान् , परिपन्थिपूगनिषूदनपटिष्ठान् , अशरणशरणान् , भयचकितप्राणिगणाभयदान् , शक्तित्रयोपचितान् , षाड्गुण्यप्रयोजनातिनिपुणान् , सिद्धित्रयोपगतान् , उदयत्रयभूषितकलेवरान् , त्रिवर्गपोषकान् , राजनीतिकोविदान् , समृद्धचतुरङ्गबलोपेतान् , महावीर्यान् , अष्टमहासिद्धिसाधकान् , शरणागतवज्रपञ्जरान् , भूभारोद्धरणकूर्मरूपान् , जगद्रक्षाजागरूकान् , गांभीर्यौदार्यधैर्यविनयनयप्रमुखगुणालङ्कृतगात्रान् , देवगुरुद्विजपरि[illegible]र्थं श्रद्धाभक्तिभरबन्धुरचित्तान् , षट्त्रिंशद्राजकुलीमुकुटायमानान् , [illegible]धार्मिकान् , परोपकारनिरतान् , लोकद्विष्टानां पापानां वधादुत्पन्नकीर्तिमन्दाकिनीपवित्रितभूमण्डलान् , यजनाध्ययनादिकर्मत्रयरतान् , किल्बिषवातेनास्पृश्यमानान् , सुरगुरुरिव दर्शितनीतिनैपुण्यान् , गङ्गोदकवन्निर्मलान् , परदारविमुखान् , स्वदारसन्तुष्टान् , धर्मधौरेयान् , आश्रितकल्पद्रुमायमानान् , षड्दर्शनाधारान् , दीनार्तिहरान् , बाह्याभ्यन्तरशौचतत्परान् , धर्मसंस्थापने ध्रुवपदप्रायान् , प्रतिपन्नवाचाऽविचलान् , आधिव्याधिबाधरहितान् , शिष्टैरुपदिष्टमार्गे प्रवर्तकान् , सदाचारान् , निजवंशकमलिनीवनविकासमार्तण्डान् , शशाङ्कनिर्मलयशोव्यक्तदिगन्तरान् , नानादानैः स्थगितबलिकर्णशिबिदधीचियशसः , रूपेण निर्जिताश्विनीकुमारसौन्दर्यान् , अशेषविद्यापारगान् , शस्त्रेषु वाहनेषु च कृताभ्यासान् , दूतवाचाभियोगैरनुदिनं यथासम्यगवस्थितपरिज्ञातपरराष्ट्रस्वरूपान् , धीरोदात्तधीरललितादिगुणालङ्कृतविग्रहान् , जितेन्द्रियान् , सप्तव्यसनैरबाधितान् , प्रजारञ्जनतत्परान् , अनेकगुणगणालयान् , स्वराष्ट्रोपचयप्रपञ्चप्रवीणान् , राज्यलक्ष्मीयोगक्षेमविशारदान् , सौभाग्यैकनिधानान् , सामदानदण्डभेदोपायानां यथास्थाने यथाविधिप्रयुञ्जनेऽतिकुशलान् , वदान्यान् , सर्वाधारान् , नानादेशीयकलाविद्भिर्दर्शितविज्ञानविशेषैर्मनीषितादप्यधिकाशापूरकान् , सेवकचकोरैश्चन्द्रकरानिवात्यर्थं पेपीयमानाननान् , नानादेशीयवनीपकानां मनोरथसाधने ऋषिकौत्सं प्रति राजश्रीरघुवदचिन्तितासंभाव्यहिरण्यदानादिदर्शनान् , परराष्ट्रेषु नानाबन्दिजनैरुद्गीयमानाऽनेकविक्रमयशोराशिभिश्चतुर्दिगन्तदिगीशभूपालानामन्तःकरणेषु मेरुतुल्यान् , विद्वज्जनपरिवारान् , विद्यावृद्धसङ्कुलसभातिलकायमानान् , पराक्रमेण अभिनवरामार्जुनादिवत् , क्षमया धरित्रीरूपान् , सत्येन युधिष्ठिरप्रतिमान् , स्थानभ्रष्टावनीशस्थापनाचार्यान् , रावणवद्दृढाहङ्कारान् , सागरवदगाधगाम्भीर्यान् , सत्सङ्गतिसंसक्तान् , श्रीसोमेश्वरपादपद्मयुगलध्यानैकचिन्तापरान् , श्रीमल्ल-

क्ष्मीकान्तप्रणतितत्परान्, द्वादशराजमण्डलीसंसेव्यमानान्, सप्तमचक्रवर्ति-अभिनवसिद्धराजमहाराजाधिराजश्रीमज्जयसिंहदेवचरणारविन्दान्, श्रीआशापल्ल्या महामात्यश्रीआलिगः क्षितितलमिलन्मौलिना साष्टाङ्गं प्रणम्य परमसौहार्दोत्सप्रश्रयमञ्जलिं बद्ध्वा विनयातिशयेन विज्ञापयति यथा। विज्ञप्य-माह। यदत्र श्रीस्वामिनां सौमनस्यात् श्रीलक्ष्मीकान्तप्रसादाच्च श्रीकुमारान्तः-पुरादिराजवर्गे निखिलेऽपि निरुपमं श्रेयोऽस्तीति अवधार्य श्रीमत्प्रभुपादैः श्रीमत्कटके निजसौराज्यकुशलवर्तीभिः परमण्डलवर्तीभिः साधुबन्धनिःश्रेय-सपराभिरमृतप्रायाभिः किंवदन्तीभिरुत्पन्नस्नेहजलामृतपूरणे महाविग्रहव-शतो राजकार्यव्यग्रतया चिरकालमसंभावनया चिन्ताधिपरितापेन स्वीयमनो-रथसारणीं यावत् प्लावयित्वा अनेकशाखानिवहेन पल्लवितव्यो वृद्धिं प्रापयित-व्यश्चापुष्पफलदर्शनम्। कार्यं च। यत् श्रीमत्स्वामिपादैः प्रसादीकृतराजादेशं देवायतनानां शेषामिव शिरसाऽभिवन्द्य समादिष्टानि निखिलानि श्रीमद्रा-जप्रयोजनानि अहर्निशं सावधानः सन् एकाग्रचित्तया यथानिर्दिष्टानि सिद्धिं प्रापयन्नस्मि। तथा मासैकमध्ये पुनरपि रथगजतुरगपदातिसङ्कुलं भूरिचतुरङ्ग-सैन्यं खड्गपट्टिशकुन्ततरवारिप्रभृतिषट्त्रिंशद्दण्डायुधोपेतं जरदजीवरक्षिकङ्क-टप्रभृतियोधानां सन्नाहभूरिजयनशालासामग्रीसहितं रिपुवर्गप्रतिघातार्थं बहु-तन्त्रं श्रीमद्घंघाटानां (?) परिग्रहार्थं प्रेषयन्नस्मीत्यवधार्य ममोचितो राजादेशः सदैव प्रसादीकार्यः। सं० १२८८ वैशाखशुदि १५ गुरौ। मदीयप्रहितरङ्कलेखो हस्तगतः प्रापयितव्यः यथा तत्प्रमाणेन त्रिपदमवधारयतां श्रीमत्सेव्यपादानां चित्ते आयव्ययस्य भ्रान्तिर्नोत्पद्यते इति।

II B स्वस्ति। श्रीमद्विजयकटके महाराजाधिराजश्रीमहामात्यपरमभट्टा-रकउमापतिवरलब्धप्रौढप्रतापसंशोषितारातिनिकरसप्तमचक्रवर्त्यभिनवसिद्ध-राजविजयविश्वलक्ष्मीस्वयंवररिपुराज्यभीमश्रीमद्भीमदेवपादारविन्दान् श्रीमत्प-त्तनात् महामात्यश्रीअमुकाकः क्षितितलमिलन्मौलिना साष्टाङ्गं प्रणम्य सविनयं विज्ञपयति यथा। विज्ञपनीयमिदम्। श्रीमत्पादैः प्रसादीकृतराजादेशं शिर-साभिवन्द्य समादिष्टप्रयोजनानि सर्वाण्यपि कारयामास। अन्यदपि कार्यादिकं सदैव विज्ञाप्यमिति॥ संवत् १२८८ वर्षे वैशाखशुदि १५ सोमे।

III C स्वस्ति। श्रीमद्विजयकटके महाराजाधिराजउमापतिवरलब्धप्रौढप्र-तापसंशोषितारातिवनगहनान् सप्तमचक्रवर्त्तिअभिनवरिपुराज्यलक्ष्मीस्वयंव-

रान्, षड्दर्शनाधारान्, सेवकजनानां कल्पद्रुमप्रायान् राजनीतिमार्गप्रवर्त्तकान् हरिहरानुध्यानाभिरतान्, राजश्रीसारङ्गदेवपादारविन्दान्, श्रीआशापल्ल्या महामात्यश्रीधरणीधरो मौलिविन्यस्तकरयुगलेन सानन्दमाशीर्भिरभिषिच्य परमसौहार्देन सविनयं विज्ञापयति यथा । विज्ञप्यमदः । यत् श्रीस्वामिनामादेशप्रमाणेन समस्तानि राजकार्याणि सिद्धिं प्रापितानि सन्तीत्यवधार्य विशेषकरणीयादेशैः प्रतिदिनमहं सम्भावनीयः । कार्तिकशुदि १५ गुरौ इति ।

## गुरुविज्ञप्तिका यथा—

I A स्वस्ति । श्रीभृगुकच्छे पूज्याराध्यादिअनेकतीर्थावगाहनपवित्रीकृतमानसान्, यजनयाजनाध्ययनप्रतिग्रहादिषट्कर्मनिरतान्, ऋग्यजुःसामाथर्वणाध्ययने अनवरतं कृतश्रमान्, देवद्विजगुरुसाध्वतिथिपूजातत्परान्, विमलकुलसरोजहंसान्, दीनानाथोद्धरणसमर्थान्, द्वितीयायां नवोदितपीयूषरुचिवत्सकलजनवन्दनीयान्, हिमकुन्देन्दुवत्स्वभावशीतलान्, विमलकुलोत्पन्नान्, गङ्गाजलवन्निर्मलचारित्रान्, सकामाशीर्भिरनवरतं पूरितयजमानाश्रितमनोरथान्, सदाचारान्, सुधर्मोपदेशकान्, याज्ञिकश्रीमोक्षपादान् चन्द्रावत्या राउलश्रीधारावर्षः साष्टाङ्गपातं प्रणम्य सविनयं विज्ञापयति यथा । विज्ञप्यमदः । यत् पूज्यानामाशिषां प्रसादादस्माकं सदैव निरुपमो महोदयस्तिष्ठतीत्यवधार्य सदैवानिर्वचनीयं सौमनस्यं मल्लक्षणानां स्वीयानामुपरि विचिन्त्य यथोचितादेश आशीर्भिः संयुतः प्रसादीकार्यः । सं० १२८८ वैशाखशुदि १५ गुरौ ।

II B स्वस्त्यमुकस्थानेऽनेकतीर्थावगाहनपवित्रीकृतमानसान् देव[illegible]जगुरुसाधुपूजानिरतान् विमलकलसरोराजहंसान् पूज्यपरमाराध्यपरमपू[illegible]र्चनीयपाठकअमुकपादारविन्दान् अमुकस्थानात्सदादेशकारी विनीतअमुका[illegible]ः परमश्रद्धया क्षितितलमिलन्मौलिना साष्टाङ्गं प्रणम्य सविनयं विज्ञपयति यथा । विज्ञपनीयमिति ॥ वयमत्राजस्रं युष्मत्पादारविन्दान् ध्यायन्तस्तिष्ठामः । युस्माभिरपि ममोपरि कारुण्यता कदाचिदपि न मोक्तव्या इति ।

## पितृविज्ञप्तिका यथा—

A स्वस्ति । श्रीपत्तने पूज्यपरमाराध्यतमोत्तमपरमपूजार्चनीयान्, अनेकगुणगणालङ्कृतकलेवरान्, निजकुलकमलिनीविकासने सहस्रकरप्रायान्, कुटुम्बभरणव्यग्रान्, दुर्भिक्षे स्वजातिपोषकान्, श्रीमल्लक्ष्मीकान्तभक्तिपरान्, परमधार्मिकान्, दीनानाथातिथिपोषकान्, आतुरभयापहारान्, महास्नेहभरेण निरुपमपुत्रवात्सल्यतत्परान्, सदाचारान्, निजवंशोद्योतकान्,

सुकुलाचारप्रवर्तकान् , देवद्विजगुरुपरिचर्यानिष्ठान् , परोपकारनिरतान् , आधिव्याधिभिरबाधितान् , महासन्तोषयुतान् , नयविनयबन्धुरगात्रान् , सत्सङ्गतिप्रवर्तकान् , व्यसनैरवाहितान् , आश्रितानां कल्पद्रुमप्रायान्, परधनहरणपङ्गुरूपान् , विशेषविद्याकलासङ्ग्रहणे अत्यादरपरान् , कलौ कृतयुगाचारान् , वदान्यान् , षड्दर्शनाधारान् , दीनार्तिहरान् , सौभाग्यैकनिधानान् , गङ्गोदकवन्निर्मलचरित्रान् , अशेषविद्यापारङ्गमान् , दुर्भिक्षे पालनपरान् , सुजने दृढसौहार्दान् , अमितयशोनिधानान् , सदायोगक्षेमसाधने भृशं पटिष्ठान् ,धर्मसाधने अहर्निशं महाजागरूकान् , पितृमहं० जयसिंहचरणकमलान् स्तम्भतीर्थात् सुतदेवडो महानन्देन साष्टाङ्गं प्रणम्य सोत्कण्ठं गाढमालिङ्ग्य च सविनयं विज्ञापयति यथा । विज्ञप्यमदः । पूज्यानां सौमनस्यात् निरामयं मामवधार्य तथा अत्रत्यसमस्तकुटुम्बमपि सारोग्यं विचिन्त्य पूज्यैः निजशरीरसौष्ठवेन तथा तत्रत्यसमस्तकुटुम्बनिर्व्याधितास्वरूपेण निरन्तरमेवाहमानन्दनीयः । कार्यं च । यत्पूज्यैः कुटुम्बयोगक्षेमव्यग्रतया चिरकालात् प्रभृति अहं लिखितेन वाचिकेन न संभावितः । तेनाहं भृशमनुशयपरो वर्त्ते । अतो ममोपरि यथापूर्वं सविशेषं मयाऽवधार्य यथोचितकरणीयादेशैः विशेषशिक्षापनाभिश्च सदैव संभावनीयः, यथाऽऽयुष्मान् सौमनस्यात् स्वचित्ते परमसौहार्दं बिभ्राणो युष्मदादिष्टानि राजकार्याणि गृहकृत्यानि च निरन्तरं सावधानः सन् सिद्धिं प्रापयामि । इत्यवधार्य सदैव संभाला अवधार्या । मदधिकृतं कार्यं सदैवादेष्टव्यं, विशेषशिक्षा च प्रसादीकार्या । वैशाखशुदि १५ गुरौ ॥

II B स्वस्त्यमुकग्रामेऽनेकगुणालङ्कृतपरमधार्मिकस्नेहगुणभूषितपुत्रवत्सलपूज्यपरमाराध्यतमोत्तमपरमपूज्यार्चनीयपितृअमुकपादारविन्दान् अमुकस्थानात्सदाविनीतसुतअमुकाको महद्भक्त्या परमहर्षेण गाढमालिङ्ग्याभिवन्द्य साष्टाङ्गं प्रणम्य सविनयं विज्ञपयति यथा । विज्ञप्यमिदम् । कुशलमत्रास्माकमिति स्वमनसि प्रमोदं विधायात्मीयकार्यकल्याणवती वार्ता मम सन्तोषायाजस्रं प्रसादीकार्या । सर्वासां मातृप्रभृतीनां मदीयप्रणामो वाच्यः । कार्यादि सदैवादेष्टव्यमिति ॥

## मातृविज्ञप्तिका यथा—

I A स्वस्ति । श्रीस्तंभतीर्थे पूज्यपरमाराध्यतमोत्तमपरमपूजार्चनीयान् , गङ्गाजलवन्निर्मलचारित्रान् , अनेकगुणगणालङ्कृतकलेवरान् , देवीश्रीअरुन्धती-.

वदहर्निशं पतिभक्तिरतान्, वधूजनपरिवृतान्, समस्तपोष्यवर्गभरणारतान्, समस्तगोत्रजापत्याशीर्वादतत्परान्, गुरुगोत्रजदेवद्विजात्यतिथिपूजनेऽत्यन्तं जागरूकान्, कुटुम्बवृद्धभक्तिनिष्ठान्, मातृगङ्गादेवीपादान् श्रीपत्तनात् महं० गोवलः साष्टाङ्गपातं प्रणम्य परमसौहार्देन सविनयं अञ्जलिं बद्ध्वा विज्ञापयति यथा। विज्ञप्यमदः। यत्पूज्यानामाशिषां प्रसादात् मां निरामयमवधार्य ममोपरि निजचित्ते परमप्रमोदं चिन्तयित्वा पूज्यपादैः निजकुले वरारोग्यवतीभिः किंवदन्तीभिरमृतप्रायाभिः मां यथेष्टमभिषिच्य मत्परमकल्याणविवृद्ध्यर्थं सदैवाशीर्वाददानैरहमानन्दनीयः। कार्यं च। यन्मया अत्र सालवीधरणापार्श्वात् कांतीतणी पञ्चवर्णचीरमेकं वर्णापितमस्ति। तथा श्रीयोगिनीपुरात् गुडीआलचूनडी घाटडी वहुरङ्गविचित्र जोडूं एक १ तथा चुवनुं चूडीउं एक १ तथा सौराष्ट्रदेशात् निर्लाञ्छनहेमवर्णकचकडां बलीआं जोडूं १ तथा बदरीफलप्रमाणमौक्तिकहार १ इत्यादि सामग्री पूज्यानां भेटनाय सज्जीकृता तिष्ठति। माघीपूर्णिमोपरि श्रीमन्मातृपादानां चरणयुगलदर्शनाय उपरिलिखितकर्पटाभरणादिकं नीत्वा समागच्छन्नस्मि। तावता ममोपरि भूरिवात्सल्यं चित्ते अवधार्य सदैवाशीर्भिः संभावनीयो यथा पूज्यानां संभावनया ममाभिनवो महोदयो भवतीति सविशेषं यथापूर्वं सदा चिन्तनीयम्। सं० १२८८ मार्गशुदि १५ गुरौ।

II B अनेकगुणपवित्रगङ्गाजलनिर्मलचरित्रसदावधूजनपरिवृतसमस्तगोत्रजापत्याशीर्वादपरपरमाराध्यतमोत्तममहासाध्वीमातृगङ्गादेवीचरणकमलान् अमुकस्थानात्सदाज्ञाविधार्यो पितृमातृभक्तितत्परः सुतअमुकाकः साष्टाङ्गं प्रणम्य सविनयं विज्ञपयति यथा। विज्ञप्यमिदम्। कुशलमत्रास्माकं सपरिवाराणामिति स्वमनसि परमप्रमोदं विधायात्मीयशरीरकल्याणवार्तया वयमजस्रमानन्दनीयाः। सुतानां पाणिग्रहणार्थं स्वजनोऽमुकाकः समागतोऽस्तीति स्वमनसि विचार्य कृत्यमादेष्टव्यमिति।

## आशीर्वादो यथा—

B स्वस्ति। श्रीमहास्थानात् यजनयाजनाध्ययनाध्यापनदानप्रतिग्रहादिषट्कर्मनिरतात् अग्निष्टोमानेकक्रतुक्रियाकुशलकरणश्रीमदाचार्यः त्रैविद्यलोकः श्रीमद्विजयकटके देवद्विजगुरुसाधुपूजनरतं राज० श्रीअमुकाकं पद्मवदननिर्गताभिः ऋग्यजुःसामाथर्ववेदागमप्रणीताभिराशीर्भिरभिनन्द्य आशीर्वादयति यथा।

कार्यं च । भवद्भिर्दापितअमुकग्रामीयभूम्या महती सारा कार्या । सदैवात्मीयधर्मो वृद्धिं नेतव्य इति ।

## व्यवहारपत्रं यथा—

I A संवत् १३३२ वर्षे आश्विनशुदि १० रवावद्येह श्रीमदणहिल्लपत्तने समस्तराजावलीसमलङ्कृतपरमेश्वरपरमभट्टारकउमापतिवरलब्धप्रौढप्रतापसंशोषितारातिवनगहनबालनारायणावतारचौलुक्यकुलकमलिनीविकासनैकमार्तण्डैकरूपश्रीमल्लक्ष्मीकान्तप्रसादसंपादिताभिनवराज्यलक्ष्मीस्वयंवरमालालङ्कृतकण्ठकन्दलीरिपुमण्डलीवननिदहने प्रलयकालीयदुर्दान्तदावानलप्रायदक्षिणाधीशावरूथिनीगजघटाकुंभस्थलविदारणैकपञ्चाननाभिनवचक्रवर्त्तिश्रीमत्सारङ्गदेवकल्याणविजयराज्ये तत्पादपद्मोपजीविनि महामात्यश्रीधरणीधरे श्रीश्रीकरणादिसमस्तमुद्राव्यापारान् परिपन्थयतीत्येवं काले प्रवर्त्तमाने तद्विभोः प्रसादपत्तलायां भुज्यमानश्रीचन्द्रावतीकरणे महाराजकुलश्रीधारावर्षमहोदयिनि अमुकामुकपथके द्रय(द्रव्य?)मुद्रायां महं० श्रीविजयसिंहे तन्नियुक्तचण्डसिंहपञ्चकुलप्रतिपत्तौ व्यवहारपत्रमभिलिख्यते यथा । श्रीप्रह्लादनपुरवास्तव्यओसवालज्ञातीयसाधुजयचन्द्रसुतगणपतिना स्वीयसमुत्पन्नप्रयोजनवशात् व्यासलक्ष्मीधरपार्श्वात् श्रीश्रीमालीयखरटङ्कशालाहतत्रिःपरीक्षितसुवर्णकगद्दिकायां श्रेष्ठयर्धेन सञ्चरमाणजीर्णविश्वमल्लप्रिया भव्या एकमुष्ट्या गृहीतद्रम्म ५०००० पञ्चाशत्सहस्राणि द्रम्मा गृहीताः । अमीषां द्रम्माणां प्रतिमासं प्रतिशतं व्याजे द्र० २ द्विकं शतप्रत्या व्याजं चटति । एते द्रम्मा मट्टस्कन्धरहिता निर्विवादकलिकावलिकउचटरहिता अष्टप्राहरिक्या निर्योगक्षेमा व्यासलक्ष्मीधरमनस्वेच्छया चटितव्याजद्रम्मैः सहिता एकमुष्ट्या प्रवेशनीयाः । अमीषां सव्याजकद्रम्माणां दानाय समस्तकलिकन्दलस्वश्वानिषेधाय तत्रैववास्तव्यओसवालज्ञातीयसाहुजगसिंहसुतपद्मसिंहः तथा श्रीश्रीमालज्ञातीयव्यव०धरणासुतविक्रमसिंह उभौ जनौ व्यासलक्ष्मीधरस्यान्तराले मनोविश्वासनिमित्तं प्रतिभुवौ दापितौ । एकेन द्वौ द्वाभ्यामेकः । एकेनापि प्रतिभुवा हस्तप्राप्तेन परस्य द्वितीयस्य उत्तरमकुर्वाणेन व्यवहारकसमं धारणिकवत् लिखितव्यवहारपत्रद्रम्माणां निर्गमो निर्वहणीयः । इहार्थे धारणिकप्रतिभुवोः स्वहस्तेन प्रदत्तमतानि । तथा यथाज्ञानं लिखितमिदं व्यवहारपत्रमुभयाभ्यर्थितेन महं० श्रीपालेन । हीनाक्षरमधिकाक्षरं वा सदैव प्रमाणमधिगन्तव्यम् ।

II B संवत् १२८८ वर्षे वैशाखशुदि १५ सोमेऽद्येह श्रीमदणहिल्लपाटके समस्तराजावलीसमलङ्कृतमहाराजाधिराजपरमेश्वरपरमभट्टारकउमापतिवरलब्धप्रौढप्रतापसंशोषितारातिनिकरससमचक्रवर्त्तिपार्वतीपतिप्रसादसम्पादितराजलक्ष्मीस्वयंवरअभिनवसिद्धराजरिपुराजभीमश्रीमद्भीमदेवकल्याणविजयराज्ये तत्पादपद्मोपजीविनि महामात्यश्रीअमुके श्रीश्रीकरणादौ समस्तमुद्राव्यापारान् परिपन्थयति सतीह अमुकामुकपथके द्वयमुद्रायां मह० श्रीविजयसिंहेऽधिकुर्वति सति एवं काले प्रवर्त्तमाने राज० श्रीचतुर्भुजस्य देवस्य प्रसादपत्तलायां भुज्यमानदन्दाहीयकपथके बालूआग्रामे तन्नियुक्तवाहकराज०अजयसिंहमहं० यशश्चन्द्रसुतमहं० जाजलप्रभृतिपञ्चकुलप्रतिपत्तौ व्यवहारपत्रमभिलिख्यते यथा। धनिको नाम नामतः इहैव वास्तव्यश्रे०अमुकाकसुतश्रे०अमुकाकः स्वधनं लाभाय प्रयुङ्क्ते । अस्य च हस्ताक्षराणि धनिको नाम नामतः । इहैववास्तव्यकुटुं० अमुकसुतकुटुं० अमुकाकेन समुत्पन्नप्रयोजनवशेन श्रीश्रीमालीयखरटङ्कशालाहतत्रिःपरीक्षितहट्टव्यवहारिक्यप्रचलितश्रेष्ठश्रीमत्पारौपथरौक्यगृहीत द्र० २१० दशाधिकशतद्वयममीषां द्रम्माणां व्याजे प्रतिमासं शतं प्रति देय द्र० २ द्वौ । एते द्रम्मा सां०कार्तिकान्ते सव्याजका मट्टस्कन्धविवर्जिता निर्योगक्षेमा एकमुष्ट्या अष्टप्राहरिका दातव्याः । उपरिलिखितविधेः पालनाय द्रम्माणां दानाय सामान्यग्राहकाचारेण दत्तप्रतिभूः कुटुम्बिकअमुकाकः तथा द्वितीयप्रतिभूः अमुकाकः । अत्र मतम् । अत्र . साक्षिणः ।

## वलितपत्रविधिः—

I A सं० १२८८ वैशाखशुदि १५ गुरावद्येह यथासन्तिष्ठमानराजावलीपूर्वं वलितपत्रमभिलिख्यते यथा । धनिको नाम नामतः अमुकग्रामवास्तव्यअमुकज्ञातीयअमुकसुत अमुको लाभाय स्वधनं प्रयुङ्क्ते । अस्य च हस्ताक्षराणि धारणिको नाम नामतः । अद्यैववास्तव्यपूर्वाभाषया अमुकाकेन स्वीयसमुत्पन्नप्रयोजनवशात् श्रीश्रीमालीयखरटङ्कशालाहतत्रिःपरीक्षितहट्टव्यवहारिक्यप्रचलित द्र० ३०० त्रीणि शतानि द्रम्मा रौक्या गृहीताः । एते द्रम्माः संप्रत्येव परत्र स्थापयित्वा द्विगुणीभूताः द्र० ६०० षट्शतानि जाताः । अमीषां द्रम्माणां संबन्धे व्यवहारकस्य मनोविश्वासनिमित्तं अमुकतडागे आम्रथड ५० पञ्चाशदडाणके मुक्ताः । अमीषामाम्राणां किल मूल्यात् प्रतिवर्षं द्र० १०० शतैकं द्रम्मा व्यवहारकेण पत्रपृष्ठतो प्रवेश्य दातव्याः । षड्भिः वर्षैः संपूर्णैः स्वयमेव आम्रा व्यवहारकस्य पत्रग्रहात् छुटन्ति । षड्वर्षानन्तरं व्यवहारकस्य

आम्रैः समं लागसंबन्धः कोऽपि नहि । आम्रा धनिकस्यैव निष्कावलाः सञ्जाताः । अस्य लिखितविधेः पालनाय आम्राणां दानाय अन्यगोत्रिदायादपत्रहस्तअन्यव्यवहारिक्यसमस्तखश्चानिवारणाय दावापितप्रतिभुवौ अमुकज्ञातीयौ अमुकामुकनामानौ अमुकामुकसुतौ अमुकामुकाख्यौ द्वौ रक्षपालौ धारणिकेन व्यवहारकस्यान्तराले दावापितौ । एकेन द्वौ द्वाभ्यामेकः । एकेन व्यवहारकस्य हस्तं प्रासेनापरस्योत्तरमकुर्वतः समग्रपत्रविधिर्निर्वहणीयः । हृहार्थे धारणिकप्रतिभूभ्यां लिखिताधिवाससन्कपञ्चसाक्षिविदितं स्वहस्तेन दत्तमतानि ।

II B संवत् १२८८ वर्षे वैशाखशुदि १५ सोमेऽद्येह श्रीमदणहिल्लपाटके समस्तराजावलीपूर्वमद्येह वालूयाग्रामे वलितपत्रमभिलिख्यते यथा । धनिको नाम नामतः । इहैव वास्तव्यकुटुम्बिकअमुकाकेन समुत्पन्नप्रयोजनवशेन श्रीश्रीमालीयखरटङ्कशालाहतत्रिःपरीक्षितहट्टव्यवहारिक्यप्रचलितश्रीमत्पारौपथरौक्यगृहीत द्र० ३०० शतत्रयमेते द्रम्मा द्विगुणीकृताः ६०० षट्शतानि स्थाप्याः । अमीषां स्थाप्यद्रम्माणां व्यवहारकस्य विश्वासनिमित्तं वलिताग्राडाणके मुक्तम् । अमुकतडागे आम्रथुड ५० पञ्चाशदाम्रा वलिताया भोग्ये मुक्ताः । अमीषां पञ्चाशदाम्राणां फलमूल्यात् प्रतिवर्षं प्रवेशे द्र० १०० शतमेकम् । आम्राणां फलानि व्यवहारकेण भोज्यानि । द्रम्माणां व्याजं नहि । संवत् १२८८ वर्षे सं. ९३ निरुद्धं षड्वर्षैराम्राः छुट्यन्ते । षड्वर्षादनन्तरमाम्राणां विषये व्यवहारकस्य लागभागो नहि । उपरिलिखितविधेः पालनाय राणकगोत्रिणां व्यवहारकाणां च खश्चारक्षणाय सामान्यग्राहकाचारेण दत्तप्रतिभूः कुटुम्बिकः अमुकाकः द्वितीयप्रतिभूः अमुकाकः । अत्र मतानि । अत्र साक्षिणः । लिखितमुभयाभ्यर्थितेन पारि० अमुकाकेन प्रमाणम् ॥

## गृहविक्रयविधिः—

A सं० १२८८ वैशाखशुदि १५ गुरावद्येह यथासन्तिष्ठमानराजावलीपूर्वं गृहविक्रयपत्रमभिलिख्यते यथा । यत् व्य० आशाकेन नागरज्ञातीयमहं० मालासुतगोदापार्श्वात् पूर्वपुरुषोपार्जितं द्विभूमिकं कावेलुकैः छन्नं दटितं समालिन्दकं पूर्वाभिमुखं सफलहिकं कोटडीसहितं पूर्वरीत्या यथानिर्गच्छमानजलमार्गयुतं स्वसीमापर्यन्तं चतुराघाटोपेतं नवनवत्याचारेण सवृक्षमालाकुलं नवविधानपूर्णं आचन्द्रार्कं शाकपणिकान्यायेन मूल्येन पञ्चमुखनगरविदितं गृहमूल्ये द्रम्म ५०० पञ्चाशत् द्रम्मैर्गृहीतम् । अत ऊर्ध्वं गृहमिदं व्यवहारकेण पुत्रपौत्रपरम्परया यदृच्छया भोक्तव्यं, यद्रोचते तत्कार्यं गृहस्यास्य ।

यथासन्तिष्ठमानालिखितगृहविक्रयपत्रानन्तरं गृहेऽस्मिन् मनःस्वेच्छया नवीनः कर्मस्थायः कारापयः । धर्मेण गृहमिदं देयम् । अथान्यहस्ते विक्रेतव्यम् । इहार्थे धारणिकेन गृहस्यास्य विक्रीतस्य विषये व्यवहारकसमं वादविवादः कीदृशोऽपि न कार्यः । इहार्थे उपरिलिखितविधेर्निर्वाहणाय अन्यगोत्रिदायादराजवर्गीयकन्दलनिवारणाय पत्रहस्तान्यव्यवहारकखश्चानिवारणाय द्वावपितान्तःस्थअमुकज्ञातीयअमुकामुकजना व्यवहारकस्य सन्तानपरम्परया विक्रीतगृहं भोगवतः समस्तवादविवादं निवारयन्ति । एकेन सर्वे सर्वैरप्येकः । परस्परमुत्तरमपरस्याकुर्वतः लिखितपत्रविधिर्व्यवहारकसमं निर्वहणीयः । इहार्थे धारणिकरक्षपालानां नामानि । पत्रं प्रमाणम् ।

## चन्द्रकालिकं विक्रयपत्रं यथा—

B संवत् १२८८ वर्षे वैशाखशुदि १५ सोमे अद्येह श्रीम[illegible]हिल्लपाटके समस्तराजावलीसमलङ्कृतपूर्वमद्येह बालुआग्रामे चन्द्रकालिक[illegible]यपत्रमभिलिख्यते यथा । धनिको नाम नामतः । इहैववास्तव्यब्रा[illegible]गअमुकाकेन पूर्वपुरुषोपार्जितं द्विभूमिकं कवेलुकाच्छन्नं समालिन्दकं पूर्वा[illegible]मुखं सफलहिकं स्वसीमामर्यादं सवृक्षमालाकुलितं नवनिधानसहितं नवनव[illegible]याचारेण व्य० खेतापार्श्वे चन्द्रकालिकं शाकफलकन्यायेन विक्रीतम् । गृहमूल्ये द्र० ५०० पञ्चशतानि । अत ऊर्ध्वं गृहमिदं व्यवहारकेण पुत्रपौत्रपरम्परया भोक्तव्यं, विक्रेतव्यं च । यद्रोचते तत्कर्तव्यम् । ब्राह्मणअमुकाकेन गृहसन्मुखं नावलोकनीयम् । गृहस्याघाटा यथा । अस्य विधेः पालनाय रा[illegible]गकगोत्रिकअन्यव्यवहारकादिखश्चारक्षणार्थं दत्तप्रतिभूः ब्राह्मणअमु[illegible]कः, तथा द्वितीयप्रतिभूः अमुकाकः । अत्र मतानि । अत्र साक्षिणः । उभयाभ्यर्थितपारि० अमुकाकेन लिखितं प्रमाणमिति ॥

## वृद्धिफलभोगपत्रं यथा—

B संवत् १२८८ वर्षे वैशाखशुदि १५ सोमेऽद्येह श्रीमदणहिल्लपाटके समस्तराजावलीपूर्वं अद्येह बालुयाग्रामे वृद्धिफलभोगपत्रमभिलिख्यते यथा ॥ धनिको नाम नामतः । इहैववास्तव्यकुटुम्बिकअमुकाकेन सञ्जातप्रयोजनेन श्रीश्रीमालीयखरटङ्कशालाहतत्रिःपरीक्षितहट्टव्यवहारिक्यप्रचलितश्रेष्ठश्रीमत्पारौपथरौक्यगृहीतोद्धारे द्र० १०० शतमेकम् । अमीषां द्रम्माणां व्यवहारकस्य विश्वासनिमित्तं पूर्वाभिमुखं समालिन्दकं द्विभूमिकं सफलहिकं स्वसीमापर्यन्तं चतु-

राघाटनिबद्धं गृहं वृद्धिफलभोगाचारेण अड्डाणके मुक्तम् । गृहस्य भाडकं नहि । द्र-म्माणां व्याजं नहि । एष वृद्धिफलभोगन्यायः । गृहस्य पतितभ्रुषितसमर्चापनोप-क्षयः सर्वोऽपि धारणिकसमक्षं पत्रे चटति । छोट्यमानगृहे गृहसमर्चापनोपक्षयो व्यवहारकेण लभ्यः । एतद् गृहं यदा तदापि अक्षयतृतीयायां समग्रकद्रम्मान् सोपक्षयान् दत्त्वा धारणिकः छोटयति । गृहस्याघाटा यथा । अस्य पत्राधःलि-खितविधेः पालनाय सोपक्षयद्रम्माणां दानाय दत्तप्रतिभूः कुटुं०अमुकाकः तथा द्वितीयप्रतिभूः अमुकाकः । अत्र मतानि । अत्र साक्षिणः ॥

## गृहाड्डाणकपत्रविधिर्यथा—

A सं० १२८८ वैशाखशुदि १५ सोमेऽद्येह यथासन्तिष्ठमानराजावलीपूर्वं श्रीचन्द्रावत्यां राउलश्रीधारावर्षपञ्चकुलप्रतिपत्तौ गृहाड्डाणकपत्रमभिलिख्य-ते यथा । धनिको नाम नामतः अमुकग्रामवास्तव्यअमुकज्ञातीयअमुकाक-सुतअमुकाको लाभाय स्वधनं प्रयुङ्क्ते । अस्य च हस्ताक्षराणि धारणिको नाम नामतः । इहैववास्तव्यवायडज्ञातीयव्य०कूरासुतसूराकेण स्वीयसमुत्पन्नप्रयो-जनवशात् श्रीश्रीमालीयखरटंकशालाहतत्रिःपरीक्षितहट्टव्यवहारिक्यप्रचलि-तश्रेष्ठश्रीश्रीविश्वमल्लप्रियद्र० ४०० चत्वारिंशतानि द्रम्मा व्यवहारकपा-र्श्वात् गृहीताः । अमीषां द्रम्माणां व्यवहारकस्य मनोविश्वासनिमित्तं पूर्वपुरुषोपार्जितं अद्यापि भुज्यमानं सफलहिकं चतुर्दिक्षु वरंडिकावृतं पट्टशालारसवतीसमन्वितं कवेलुकैः समाच्छन्नं दट्टितं द्विभूमिकं पूर्वा-भिमुखं स्वगृहं अधोविलिखितचतुराघाटोपेतं वृद्धिफलभोगाचारे अड्डाणके मुक्तम् । गृहस्य भाटकं नहि । द्रम्माणां व्याजं नहि । अयं वृद्धिफलभोगा-चारः । गृहस्याघाटा यथा । पूर्वस्यां दिशि देवसदनस्य वरण्डिकायां सीमा, दक्षिणस्यां दिशि वा०देवडगृहनीवपाते सीमा, पश्चिमायां दिशि राजभ-वनकोटडीमर्यादा, उत्तरस्यां दिशि राजमार्गे मर्यादा । एवं चतुराघाटोपेतं पूर्व-पुरुषोपार्जितं स्वगृहं मया व्यवहारकस्य मनोविश्वासनिमित्तं अद्यदिनपूर्वं पञ्च वर्षाणि बन्धीकृत्य अड्डाणके मुक्तम् । यदि गृहस्यास्याङ्गजगोत्रिदायादराज-कुलप्रभृतिना व्यवहारकस्य कीदृशोऽप्युपक्षयो जायते स सर्वोऽपि धारणि-केन निर्वहणीयः । अथ कदापि व्यवहारकस्य भीडायां जातायां द्रम्मा विलो-क्यन्ते, तदा धारणिकमाक्रम्य द्रम्मा ग्राह्याः । नो वा धारणिकविदितमन्यव्यव-हारकहस्ते पत्रमड्डाणकं दत्त्वा द्रम्मा ग्राह्याः । गृहमिदं दैववशादग्निदाहेन अति-

जलपाताद्या ज्वलति पतति भ्रुषति तदा धारणिकेन निजवित्तं व्ययित्वा तादृशमेव गृहं काराप्य व्यवहारकस्य देयम्। अथ कदापि धारणिकः स्वयं कारयितुं न शक्नोति, तदा व्यवहारकेण अग्नीकपायाउपरि धारणिकविदितं तादृशमेव काराप्यम्। काठकिवेल्लूकडीयमंजूरप्रभृतीनां लागिद्रम्मा व्याजसहिताः सोपक्षया धारणिकविदितं पत्रे चटाप्याः। गृहमध्ये कोष्ठकं कृत्वा अथ भूमावेव चणकलवणं वा व्यवहारकेण न क्षेपणीयम्। तेनोपद्रवेण यदि कीदृशोऽपि गृहे विनाशः स्यात्, ततो व्यवहारकेण स्वीयद्रव्यं व्ययित्वा गृहं समराप्यम्। एवं व्यवहारकेण लिखितावधिं यावन्निजमनोहार्या गृहं भोगवनीयम्। अवधेरूर्ध्वं प्रतिवर्षं दीपोत्सवे सामकसोपक्षयद्रम्मैर्दत्तैः छुटति। दीपोत्सवादूर्ध्वं प्रतिपद्दिने ग्रन्थिबद्धैरपि द्रम्मैर्धारणिकः छोटयितुं न लभते। अस्योपरि लिखितविधेः पलापनाय सामकसोपक्षयद्रम्माणां दावापनाय अन्यगोत्रिदायादपत्रहस्तान्यव्यवहारिक्यादिसमस्तखश्चान्निवारणाय दावापितआधिपालप्रतिभूअमुकज्ञातीयअमुकसुतअमुकामुकाकौ द्वौ चरौ वा लिखितपत्रविधिं समग्रामपि धारणिकवद्व्यवहारकसमं निर्वहतः। एकेन सर्वे सर्वैरप्येकः। एकेन व्यवहारकस्य हस्तप्रासेन अपरस्योत्तरमकुर्वतो धारणिकवत् व्यवहारकलिखितपत्रविधेः निखिलोऽपि निर्गमो विधेयः। परस्परमुत्तरप्रत्युत्तरो न कार्यः। इहार्थे धारणिकआधिपालानां स्वहस्तेन अधिवाससत्कीयपञ्चसाक्षिविदितं प्रदत्तमतानि। लिखितपत्रमिदं उभयाभ्यर्थितेन पारथीजयताकेन। हीनाक्षरमधिकाक्षरं वा प्रमाणम्।

## गृहडुलिपत्रं यथा—

A सं० १२८८ वैशाखशुदि १५ गुरावद्येह यथासन्तिष्ठमानराजावलीपूर्वं आधिपत्रमभिलिख्यते यथा। श्रीपत्तनवास्तव्यवा०मालापार्श्वात् स्वकार्यवशात् व्य०सोमाकेन स्वीयगृहमाधौ मुक्त्वा गृहीतद्रम्म २०० शतद्वयं द्रम्मा गृहीताः व्याजे शतं प्रति द्र० २। अमी द्रम्माः सव्याजका मद्दस्कन्धरहिता एकमुष्ट्या सां० अक्षयतृतीयायां व्यवहारकस्य देयाः। यदि कथितदिने द्रम्मान् न ददाति तदा द्विगुणदत्तद्रम्मैर्गृहमाचन्द्रार्कं डुलति। प्रतिभूभिर्धारणिकेन च डुलितगृहपत्रं नवनवत्याचारेण व्यवहारकस्य लिखाप्य देयम्। इहार्थे धारणिकप्रतिभुवां च पञ्चाधिवाससाक्षिसमं दत्तमतानि स्वहस्तेन प्रमाणानि।

## अथ क्षेत्राड्डाणकपत्रम्—

A सं० १२८८ वैशाखशुदि १५ गुरावद्येह यथासन्तिष्ठमानराजावलीपूर्वं क्षेत्राड्डाणकपत्रमभिलिख्यते यथा । धनिको नाम नामतः श्रीपत्तनवास्तव्यश्रीमालज्ञातीय व्य०चाहडो लाभाय स्वधनं प्रयुङ्क्ते । अस्य च हस्ताक्षराणि धारणिको नाम नामतः । संखारीग्रामवास्तव्यकुडुं०मोखाकेन स्वीयसमुत्पन्नप्रयोजनवशात् व्य०चाहडपार्श्वात् श्रीश्रीमालीयखरटङ्कशालाहतत्रिःपरीक्षितसर्वत्रव्यवहरमाणश्रेष्ठजीर्णविश्वमल्लप्रियगृहीतोद्धारद्रम्माः ५०० पञ्चशतानि द्रम्मा गृहीताः । अमीषां द्रम्माणां सम्बन्धे धनिकस्य मनोविश्वासनिमित्तं पूर्वपुरुषोपार्जितं अद्यापि भुज्यमानं सवृक्षमालाकुलं नवविधानसहितं चतुराघाटोपलक्षितं निजं क्षेत्रं वृद्धिफलभोगाचारेण अड्डाणके मुक्तम् । धनिकेन क्षेत्रमिदं सामकद्रम्मान् दत्वा अक्षयतृतीयायां प्रतिवर्षं छोटनीयम् । क्षेत्रस्यायपदं व्यवहारकेण भोक्तव्यम् । चतुर्थीदिने ग्रन्थिबद्धैरपि द्रम्मैः क्षेत्रं छोटयितुं धारणिको न लभते । अस्योपरि लिखितपत्रविधेः पलापनाय अन्यगोत्रिदायादपत्रहस्तान्यव्यवहारकसमस्तखश्चानिवारणाय दापितप्रतिभुवौ अमुकाकौ लिखितपत्रविधिं निर्वहतः । एकेन द्वौ द्वाभ्यामेकः । एकेन हस्तप्राप्तेन व्यवहारकस्यापरस्योत्तरमकुर्वाणेन लिखितपत्रविधिर्निर्वहणीयः । इहार्थे अधिवासे समेत्य जनत्रयसाक्षिसमं मतानि ।

## अश्वाड्डाणकपत्रमभिलिख्यते यथा—

I A यथासन्तिष्ठमानपूर्वलिखितराजावलीपूर्वं सं० १२८८ वैशाखशुदि १५ सोमेऽद्येह श्रीपत्तने अश्वाड्डाणकपत्रमभिलिख्यते यथा । धनिको नाम नामतः । इहैववास्तव्यआसधीरो लाभाय स्वधनं प्रयुङ्क्ते । अस्य च हस्ताक्षराणि धारणिको नाम नामतः । इहैववास्तव्यहेडाउनागडेन स्वीयसमुत्पन्नप्रयोजनवशात् श्रीश्रीमालीयखरटंकशालाहतत्रिःपरीक्षितहट्टव्यवहारिक्यप्रचलितजीर्णश्रेष्ठश्रीविश्वमल्लप्रियद्र० ८०० अष्टौ शतानि द्रम्मा गृहीताः । व्यवहारिआसधीरमनोविश्वासनिमित्तं हेडाउनागडेन स्वीयहरीउघोड्ड १ तथा श्रीषण्ड घोड्ड १ उभयं द्वौ घोटकौ व्य० आसधीरद्वारे निबद्धौ । तदेतयोर्द्वारनिबद्धघोटकयोः खडखादनमोदनस्थानपालवैद्यौषधग्राहरिक्याद्युपक्षयः सर्वोऽपि धारणिकेन वोढव्यः । यदि धारणिकः पत्रलिखितोपक्षयविधिं प्रतिदिनं न वहति ततो व्यवहारकेण खडस्थाने शां-

परा ग्वादनस्थाने वालुका वारिस्थाने मूत्रमश्वयोर्बन्धनीयानि । अनेनापि परिणा विधीयमाने तस्मिन्नर्थे धारणिकेन व्यवहारकस्य परिपन्था न कार्या । ईदृशे समये यदा धारणिकः पत्रसमयेन उपक्षयनिर्वाहं न कुरुते ततो दिनैकादूर्ध्वं व्यवहारकेण प्रतिदिनं सर्वोपक्षयलाग्यां द्र० १ ॥ सार्धद्रम्मैको वैद्यानाम् यथोपचारलागिद्रम्माश्च उद्धारपत्रपृष्ठितो लिखनीयाः । घोटकयोर्योग... धारणिकवत् सर्वोऽपि व्यवहारकेण निच्छद्मवृत्त्या विधातव्यः । तदेतयोर्घोटकयोर्द्वारनिबद्धयोः स्वकार्यवशात् व्यवहारकेण तत्परिजनेन यदृच्छया आसमुद्रान्तमारुह्य पर्यटनीयम् । यदि कदापि अनिवाहनात् रुधिरभृतावश्वौ म्रियेते , पलायनं कृत्वा व्रजतः, अमार्गगकैराक्रमणेन, केडसरीयेते, उद्भ्रम्य गच्छतः, उत्कर्णितौ म्रियेते, जले बुडतः, शूलायितौ म्रियेते, व्याधिना विपद्येते, मोकीरके व्याघ्रसिंहादिश्वापदैर्मार्येते, अथ राजविद्रवेण परचक्रे आगते म्रियेते, अथ धारणिकवैरिणा गृहे प्रविश्य मार्येते, कीलके स्फुटित्वा म्रियेते कोऽपि वैरी रसनाकर्तनं विधाय मारयति, उत्पन्नचरणव्रणैः माटौ जायेते, अग्निदाहाहतिजलवाताहतिसर्पदंशनाद्वा कदाचिदपि अन्येन दैवोपघातेन एतौ घोटकौ विनाशं प्राप्नुतः , तदा हेडाउनागडेन व्य० आसधीरद्वारे तद्वर्णौ तत्तुल्यौ तत्सुतौ वा अन्यौ तद्वयस्कौ अग्रीकमृतविनष्टघोटकयोः स्थाने तादृशावेव बन्धनीयौ । एतौ द्वौ घोटकौ हेडाउनागडेन अद्यदिनपूर्वं मासद्वयमध्ये पत्रे लिखितसोपक्षयसव्याजकद्रम्मान् व्य० आसधीरस्य कलिंकावलिरहितान् एकमुष्ट्या रौक्यानेव माटभाटवर्जं प्रवेशयित्वा छोटनीयौ । यदि लिखितदिनपूर्वं मासद्वयावधौ सव्याजकसोपक्षयद्रम्मान् दत्वा धारणिको व्यवहारकपार्श्वात् लिखितपत्रविधिना घोटकौ न छोटापयति, तदा शाकपणिकान्यायेन षण्डबदरीफलन्यायेन वा व्यवहारकेण धारणिकविदितं उभावपि घोटकौ हट्टे नीत्वा वर्तमानतद्दिनमूल्येन विक्रीय यथोत्पन्नद्रम्माः सव्याजकाः सोपक्षया ग्रहीतव्याः । कदापि तदेताभ्यां विक्रीतघोटाभ्यां पत्रे लिखितद्रम्माः सोपक्षया न पूर्यन्ते तदा व्यवहारकेण धारणिकपार्श्वात् अथवा दावापितप्रतिभूभ्यां घोटकविक्रयं धारणिकविदितं कारयित्वा लिखितपत्रविधिना घटितहीनद्रम्माणां निर्वाह उभयोरपि धारणिकप्रतिभुवोः गृहात् अपरवस्तु विक्रीय विशुद्धिः काराप्या । तथा विक्रीतघोटकयोर्हीनाधिकमूल्यविषये कालान्तरेणापि व्यवहारकसमं धारणिकेन परिपन्था काऽपि न कार्या । अस्योपरिलिखितपत्रविधेर्निर्वहणाय पलापनाय च दावापितप्रतिभूश्रीमालज्ञातीयवा०जगसीसुतपूना तथा गूर्जरज्ञातीयवा०मोषासुत-

खोखाकः उभौ प्रतिभुवौ धारणिकवत् समग्रलिखितपत्राक्षरविधेर्निर्वाहं कुर्वतः। एकेन द्वौ द्वाभ्यां एकः। व्यवहारकस्य लिखितपत्राक्षरविधेर्निर्वाहं कारापयन् एकेन हस्तप्रासेन द्वितीयस्य उत्तरो न विधेयः। धारणिकवत् समग्रपत्रविधेर्निर्वाहो व्यवहारकसमं विधातव्यः। इहार्थे धारणिकप्रतिभुवोः स्वहस्तेन दत्तमतानि। तथा यथाज्ञातियथानामप्रत्ययं साक्षित्रयं पंचकं वा पत्रे लिखितव्यम्। हीनाक्षरमधिकाक्षरं वा पत्रलिखितं प्रमाणम्।

II B संवत् १२८८ वर्षे वैशाखशुदि १५ सोमे अद्येह श्रीमदणहिल्लपाटके समस्तराजावलीपूर्वमद्येह बाल्हूआग्रामे अश्वपत्रमभिलिख्यते यथा। धनिको नाम नामतः इहैव वास्तव्यव्य०खेताकः लाभाय स्वधनं प्रयुङ्क्ते। अस्य च हस्ताद्धारणिको नाम नामतः। इहैववास्तव्यहेडाऊअमुकाकेन समुत्पन्नप्रयोजनेन श्रीश्रीमालीयखरटङ्कशालाहतत्रिःपरीक्षितप्रचलितहट्टव्यवहारिकयश्रेष्ठश्रीमत्पारौपथरौक्यगृहीतोद्धारे द्र० ८०० अष्टौ शतानि। अमीषां द्रम्माणां व्याजे शतैकस्य मासं प्रति द्र० २ द्वौ। अमीषां सव्याजकद्रम्माणां व्यवहारकस्य विश्वासाय व्यवहारकद्वारे निबद्धौ अड्डाणके मुक्तौ श्रीषंडपोलिघोटकौ। अनयोर्द्वारनिबद्धयोः खडखादनमोदनस्थानपालवैद्यौषधप्राहरिकप्रभृतिउपक्षयो हेडाऊ(हेडावुक्क) अमुकाकेन वोढव्यः। यदि हेडाऊअमुकाकः खादनाद्युपक्षयं न प्रयच्छति तदा खडखादनादि उपक्षयं भणित्वा दिनं प्रति व्यवहारकेण पत्रे उद्धार्यम्। सार्द्धद्रम्मः दिनं प्रत्युपक्षये चटति। तथाऽनयोर्घोटकयोर्द्वारनिबद्धयोरग्निदाहादिभिर्जलपानात् सर्वातिदेशेनाश्वस्कन्धाधिरोहणादतिवाहाद्राजविद्रवात् समस्तराजकदैवकवशात् वातपित्तश्लेष्मादिरोगात् योगक्षेमादिकमुत्पद्यते तत्सर्वं धारणिकस्य। यदा च कथंचिज्ज्ञातयोगक्षेमः तदा तावद्वर्णौ तादृङ्मूल्यौ चानयोः स्थाने धारणिकेन धनिकस्य द्वारे घोटकौ बन्धनीयौ। आभ्यां घोटकाभ्यां धारणिकपरिवारेण समं व्यवहारकपरिवारेण वा आकर्णपुच्छं मर्यादी कृत्याकच्छासमुद्रान्तायामवन्यां पर्यटनीयम्। अनयोर्द्वारनिबद्धअड्डाणकयोर्घोटकयोः खडस्थाने कुशाः खादनस्थाने कुलवाः डांषरादि नीरणे दीयमाने धारणिकेन कापि परिपन्था न कार्या। पत्रलिखितमितिपूर्वं मासैकेन घोटकौ न छोटयति तदा खण्डबदरन्यायेन व्यवहारको विक्रीणाति॥ विक्रीतघोटकयोः ये केऽपि द्रम्मा न पूर्यन्ते ते सर्वेऽपि द्रम्मा धारणिकेन आधिपालकेन प्रतिभुवा च उभाभ्यां सोपक्षयाः सव्याजकाः द्रम्माः स्वगृहाद्दातव्याः। अनयोर्विक्रीताश्वयोर्हीनाधिकमूल्यविषये कालान्तरेऽपि धारणिकेन परिपन्था कापि न कार्या। अस्योपरिलिखितविधेः पालनाय सोपक्षयकसव्याजकद्रम्माणां दानाय घोटकयोः छोट-

नाय सामान्यग्राहकाचारेण दत्तप्रतिभूः राज० अमुकाकः तथा द्वितीयप्रतिभूः । अत्र मतानि । अत्र साक्षिणः । लिखितमिदम् ।

## आधिपत्रं यथा—

I A सं० १२८८ वैशाखशुदि १५ सोमेऽद्येह श्रीपत्तने यथालिखितराजावलीपूर्वं आधिपत्रमभिलिख्यते यथा । धनिको नाम नामतः इहैववास्तव्यवा०र्खीमाको लाभाय स्वधनं प्रयुङ्क्ते । अस्य च हस्तात् [illegible]णिको नाम नामतः । इहैववास्तव्यवा०पूनाकेन स्वीयसमुत्पन्नप्रयोजनवशात् व्य०र्खीमाकपार्श्वात् श्रीश्रीमालीयखरटङ्कशालाहतत्रिःपरीक्षितहट्टव्यवहारिकयप्रचरत्श्रेष्ठविवल्लक्यर्वीसलप्रियद्र०२००शतद्वयं द्रम्माः गृहीताः । अमीषां द्रम्माणां व्याजे मासं शतं प्रति द्र०२ द्वौ द्रम्मौ चटतः । ततोऽमीषां द्रम्माणां दानाय व्यवहारकस्य मनोविश्वासनिमित्तं आधीकृतं पूर्वाभिमुखं समालिन्दकं द्विभूमिकं दटितं कवेलुकैः छन्नं सफलहिकं सप्राङ्गणं यथालिखिताघाटसहितं वा०पूनाकेन आधौ मुक्तम् । गृहस्यास्य आघाटा यथा । पूर्वस्यां दिशि वा०जगसीगृहस्य पाश्चात्यनीव्रजलपाते मर्यादा । दक्षिणस्यां दिशि वा०चाहडस्य कोटडीमर्यादा । तथा पश्चिमायां दिशि राजमार्गे सीमा । उत्तरस्यां दिशि देवश्रीआदिनाथदेवालयस्य वरंडिकायां सीमा । एवं चतुराघाटोपेतं स्वीयगृहं व्यवहारकस्य आधौ कृत्वा दत्तम् । गृहमिदं सां० अक्षयतृतीयायां दत्तसव्याजकद्रम्मैः माटघाटरहितैः एकमुष्ट्या लिखितपत्रविधिना कलिकावलिवर्जं व्यवहारकस्य प्रवेशितैः छुटति । यदि धारणिको लिखिताक्षरविधिना सां० अक्षयतृतीयायां न छोटयति ततः प्रतिवर्षं अनेनैव विधिना व्यवहारकेण गृहमिदं लिखितपत्राक्षरप्रमाणेन व्यवहारकस्य प्रवेशद्रम्मैः छुटति । कदापि गृहमिदं राजकदैवकवशात् ज्वलति ध्रुषति पतति तदा धारणिकेन प्रतिभूभिश्च तादृशमेव गृहं काराप्य व्यवहारकस्य दातव्यम् । अनेन लिखितविधिना व्यवहारकेण गृहमिदं आचन्द्रार्कं भोगवनीयं, यावता धारणिको लिखितपत्रविधिना द्रम्मान् सव्याजकान् न ददाति । इहार्थे लिखितपत्रविधेर्निर्वाहणाय दावापितप्रतिभूः ओसवालजगसीसुतपूना तथा नागरबाहडसुतचाहड उभौ दावापितप्रतिभुवौ । एकेन द्वौ द्वाभ्यामेकः । परस्परमुत्तरं अपरस्य अकुर्वाण एक एव प्रतिभूर्धारणिकसमं लिखितपत्रविधेः निर्वाहं कुरुते । इहार्थे धुरप्रतिभुवोः स्वहस्तेन प्रदत्तमतानि ॥ तथा यथालिखितसाक्षिपञ्चकसहितं पारथीजयताकेन लिखिताधिपत्रं प्रमाणमिति ॥

II B संवत् १२८८ वर्षे वैशाखशुदि १५ सोमेऽद्येह श्रीमदणहिल्लपाटके समस्तराजावलीपूर्वमद्येह बालूआग्रामे आधिपत्रं लिख्यते यथा ॥ धनिको नाम नामतः इहैववास्तव्यव्य० खेताकः स्वधनं प्रयुङ्क्ते । अस्य च हस्ताद्धारणिको नाम नामतः । इहैववास्तव्यकुटुम्बिकअमुकाकेन समुत्पन्नप्रयोजनवशेन श्रीश्रीमालीयखरटङ्कशालाहतत्रिःपरीक्षितहट्टव्यवहारिक्यप्रचरत्–श्रेष्ठश्रीमत्पारुपथकगृहीतद्रम्म २०० शतद्वयममीषां व्यवहारकस्य विश्वासनिमित्तं आडीकृतं पूर्वाभिमुखं समालिन्दकं द्विभूमिकं कवेलुकाच्छन्नं सफलहिकं स्वसीमापर्यन्तं गृहं मुक्तम् । गृहस्याघाटा यथा । एते द्रम्मा अक्षयतृतीयायां सव्याजका मट्टस्कन्धबाह्या रौक्या एकमुष्ट्या दातव्याः । यद्यक्षयतृतीयायां द्रम्मान्न ददाति, तदा द्विगुणद्रम्मैर्गृहमिदमनेनैव पत्रेणैव चन्द्रकालिकं डुलति । अस्योपरिलिखितविधेः परिपालनाय सामान्यग्राहकाचारेण दत्तप्रतिभूः अमुकाकः तथा द्वितीयप्रतिभूः । एकेन द्वौ द्वाभ्यामेकः । अत्र मतानि । अत्र साक्षिणः । लिखितमिदमुभयाभ्यर्थनया परि० अमुकाकेन ॥

## धर्मेण दत्तभूमिपत्रविधिः—

I A सं० १२८८ वैशाखशुदि १५ सोमे यथालिखितराजावलीपूर्वं बालूआग्रामे धर्मपत्रमभिलिख्यते यथा । यदिहैववास्तव्यविप्रदामोदरसुतठ० मुकुन्देन संसारविलसितं क्षणदृष्टविनष्टमनित्यं नित्यः केवलो धर्म एव शाश्वत इत्यादि वैराग्यं तथा संसारासारतां च स्वमनसि निश्चयपूर्वं विचिन्त्य श्रीसोमपर्वणि उनाउआवास्तव्यजानीविद्यानिधिसुतजानीहरिहरशर्मणा द्विवेदाय विप्रवराय उनाउआग्रामीयस्वीयडोहलिकाभूमीमध्यात् तद्ग्रामीयग्रामेयकानां धर्मस्थानिनां अन्येषां विप्राणां च विदितं धर्मेण प्रदत्तभूर्माहल १ हलैकस्य भूमी धर्मेण प्रदत्ता । अद्यदिनानन्तरं जानीहरिहरेण मया धर्मेण दत्तहलैकभूमेरायपदमाचन्द्रार्कं पुत्रपौत्रादिसन्तानपरंपरया भोगवनीयम् । इहार्थे लिखितपत्रं समस्तग्रामाधिवासिनां राजवर्गिणां च विदितं मुकुन्देन । तथा स्वीयसमस्तगोत्रकुटुम्बानां च स्वहस्तेन प्रदत्तमतानि । तथा तद्ग्रामाधिवासिनां चातुर्वर्ण्यलोकानां साक्षिणश्च । तथा समस्तकुटुम्बाभ्यर्थितेन पारथीजयसिंहेन लिखितमिदं धर्मपत्रं हीनाक्षरमधिकाक्षरं वा प्रमाणम् । स्वआज्ञा केनापि न विघातव्या इति ।

II B संवत् १२८८ वर्षे वैशाखशुदि १५ सोमेऽद्येह श्रीमदणहिल्लपाटके

समस्तराजावलीपूर्वं बालूआग्रामे धर्मपत्रमभिलिख्यते यथा ॥ इहैववास्तव्य-ब्राह्मणअमुकसुतअमुकाकेन संसारासारतां विचिन्त्य सोमपर्वणि प्रभासक्षेत्रे अमुकज्ञातीयब्राह्मणअमुकाय ग्रामीयडोहलिकामध्यात् तेषां ग्रामीयग्रामेयकानां धर्मस्थानिनां च विदितमाचन्द्रार्कं धर्मेण प्रदत्तभूमी हलः १ हलैका भूमी ब्राह्मणद्विवेदअमुकाय स्वपितुरात्मनश्च श्रेयसे प्रदत्ता । आचन्द्रार्कं धर्मेणाद्यदिनानन्तरं तदीयपुत्रपौत्रपरम्परया एषा प्रदत्ता भूमी भोक्तव्या ॥ अत्र मतानि । अत्र साक्षिणः । समस्तपुत्रभ्रातृगोत्रविदितमभिलिख्यते ॥

## दासीपत्रविधिः—

I A सं० १२८८ वैशाखशुदि १५ गुरावद्येह यथापूर्वलिखितराजावलीपूर्वं दासीविक्रयपत्रमभिलिख्यते यथा । यत्परराष्ट्रोपरि दत्तधाट्यां राणाश्रीप्रतापसिंहेनानीता गौरवर्णा षोडशवार्षिकी पनुतीनाम्नी दासी शिरसि तृणं दत्वा पञ्चमुखनगरविदितं चतुष्पथे रहाप्य विक्रीता । व्यवहारकआसधरेण दासीकर्मकरणाय राणाश्रीप्रतापसिंहस्य वीसलप्रियद्र० ५०४ चतुरधिकपञ्चशतानि द्रम्मान् दत्वा पनुती नाम दासी समस्तनगराधिवासचातुर्वर्ण्यलोकानां विदितं मूल्येन गृहीता । अतःपरमनया दास्या व्यवहारकगृहे खण्डनपेषणगृहलिम्पनसम्मार्जनेन्धनानयनपानीयोद्वहनादिकं मूत्रपुरीषोत्सर्गादिकं महिषीगोअजादोहनादिकं दधिविलोडनं तथा क्षेत्रखलके तक्रानयनं चारिआनयनादिकं निन्दनकर्तनादिकं क्षेत्रकर्म अन्यदपि गृहकर्म सर्वमकुटिलबुद्ध्या करणीयम् । इत्थं प्रवर्तमानाया दास्या व्यवहारदेशकालानुरूपं विभवानुमानेन भोजनाच्छादनादिकं सर्वमप्रार्थितं दातव्यम् । तथा अस्या दास्या व्यवहारकगृहे कर्म कुर्वत्याः तस्याः पिता भ्राता भर्ता वा धनिकत्वं विधाय कर्मविघातं कारयति तदा व्यवहारकेण बन्धताडनादिघातैर्निर्दयं ताडयित्वा पुनरपि समग्रपत्रलिखितदासीकर्मणि नियोजनीया । दासीयं यदि कदाऽपि ताड्यमाना कूपपतनादि आत्मघातं कुरुते, तदा गर्दभी शुनी चाण्डाली भूत्वा सा दासी म्रियते । व्यवहारकस्य गङ्गास्नानम् । अस्योपरिलिखितविधेः पालनाय निर्वहणाय दासीपितरक्षपालाः तथा नगराधिवासिनः साक्षिणश्च । इहार्थे राणाप्रतापसिंहस्य तथा रक्षपालानां चतुर्णां च यथानाम्नां स्वहस्तेन प्रद[illegible]नि । लिखितमिदं पत्रं उभयाऽभ्यर्थितेन पारथीजयताकेन हीनाक्षरमधिकाक्षरं वा प्रमाणमिति ।

II B संवत् १२८८ वर्षे वैशाखशुदि १५ सोमेऽद्येह श्रीमद[illegible]

समस्तराजावलीपूर्वमद्येह वाल्लूआग्रामे दासीपत्रमभिलिख्यते यथा । धीना नाम नामतः इहैववास्तव्यश्रे०खेताकः स्वधनं लाभाय प्रयुङ्क्ते । अस्य च दम्नाऊागणिको नाम नामतः । इहैववास्तव्यराज०अमुकाकेन महाराष्ट्रोपरि चटितेन महामण्डलेश्वरराणकश्रीवीरधवलदेवधाट्यां समानीता गौरवर्णा षोडशवार्षिकी सुविषया सुलक्षणा अमुकनाम्नी विक्रीता। दासीमूल्ये द्र० ६० षष्टिद्रम्माः ।अद्यदिनानन्तरमनया दास्या स्वभावविनयनम्रया व्यवहारकगृहे खण्डनपेषणसम्मार्ज्जनरन्धनसमालेपनादि अन्यदपि क्षेत्रखलकादिकं च सर्वमपि करणीयम् । अन्यत्र विक्रीणाति धर्मेण वा ददाति तत्र सर्वमप्यकुटिलबुद्ध्या कर्तव्यम् । यदि व्यवहारकगृहे चौर्यादिकं किमप्यन्यायं करोति तदा अस्या दास्यास्ताडनादिशिक्षा कार्या। यदि ताड्यमाना सती कूपतडागादिस्थानं करोति तदा एषा गर्दभचाण्डालन्यायेनास्थानं कृत्वा म्रियते । एषा आत्मघातका आत्मनैव लेपेन लिप्यते । निर्दोषव्यवहारकस्य गङ्गास्नानम् । तथास्या दास्या व्यवहारकगृहे कर्म कुर्वत्या धारणिकेन तदीयभ्रात्रा सुतेन स्वजनेन वा चक्षुःसञ्ज्ञया भ्रूसञ्ज्ञया कृत्रिमभर्त्रा वा कृत्वा कर्मविघातो मनसा विघातो वा कस्मिन्नपि विषये न कार्यः । धारणिकेन व्यवहारकेण वा कस्मिन्नप्यर्थे कुटिलबुद्ध्या न कर्तव्यम् । अस्योपरिलिखितविधेः पालनाय सर्वकार्यकरणादिविनाशादिरक्षणाय दत्तप्रतिभूः भ्रातृराज०अमुकाकः तथा कार्यकरणविषये अन्तरा प्रतिभूः । देवश्रीवैद्यनाथपत्रमुत्पाटयति । अत्र मतानि । अत्र साक्षिणः ॥ लिखितमिदम् ॥

## स्वयमागतदासीपत्रविधिः—

I A सं० १२८८ वैशाखशुदि १५ सोमे यथापूर्वलिखितराजावलीपूर्वं स्वयमागतदासीपत्रमभिलिख्यते यथा । यत्पूर्वदिग्भवमहीतटदेशादागता सिरनारग्रामीया राजपुत्री जगडसुता दशवर्षीया संपूरीनाम्नी दुर्भिक्षवशादथ म्लेच्छैः व्यापादिता राष्ट्रलुषितनिखिलान्तेषु विसंष्ठुलनागरिकलोकेन समस्तकुटुम्बेन परित्यक्ता मात्रा पित्रा भ्रात्रा भ्रातृपुत्रपितृव्यकप्रभृतिपितृगृहकुटुम्बेन तथा श्वश्रूश्वशुरपतिज्येष्ठदेवरप्रभृतिश्वशुरवर्गेणापि न धारिता उभयोरपि पितृवर्गश्वशुरवर्गयोः कुटुम्बं दुर्भिक्षवशात् भिक्षाटनं कुर्वाणं परि[illegible] एकाकिनी अधोमुखं नीत्वा निसृता । प्रतिग्रामं प्रतिगृहं [illegible]माना, तदनु तस्यापि अकृतपूरणामासिवशादत्यन्तकृशा, मलिनगात्रा, जीर्णवस्त्रखण्डावृता, देवगृहमठप्रपासत्राकारादिस्थ-

नेषु निवासिनी, घृष्टमूर्द्धका समस्तदिशो कान्दिशीकवद्विलोकयन्ती, क्षुत्पिपासादिना अन्यथा इत्येवं विचिन्तयन्ती सती यदहं किं करोमि, क्व गच्छामि, क्व तिष्ठामि, को मे अनाथायाः स्वामी भविष्यतीति, केवलं मृत्युतुलामापन्ना, देव ! अनाथाहं प्रतिगृहमिति वदन्ती कोऽपि दासीं रह्लापयतीति भाषमाणा विधिवशादित्थं परिभ्रममाणा सती अमुकवर्षमासनिथौ अमुकग्रामवास्तव्यवाणि०चाहडपादयोर्लगित्वा हस्तौ च संयोज्य स्वयमागत्यात्मानं दासीकर्मणि नियोजितवती त्वं मां कालापदिष्टदुर्भिक्षात् त्राहि । अहं युष्मदादेशेनामरणान्तं यावद्दासीकर्मणि युक्ता सती खण्डनपेषणसम्मार्जनपानीयानयनगोमयानुलेपनमूत्रपुरीषोत्सर्जनसमस्तगृहकर्म बाह्यकर्म कृषिकर्म क्षेत्रखलकादिसर्वकर्म सोत्साहा सती वर्षाशीतोष्णकाले ऽपि दिवारात्रौ आलस्यरहिता निरुत्तरा सर्वं दासीकर्म युष्मादेशितं करिष्ये । भवद्भिः स्वशक्त्या मम केवलं भोजनाच्छादनोपानहादि दातव्यम् । अधिकं किं याचिष्ये । इति नगरचतुष्पथे समग्रचातुर्वर्ण्यलोकविदितं वाणि० चाहडेन तस्याः कथितं मानयित्वा सा दासीकर्मविषये रह्लापिता । ततः पुनरपि तदा वाणि०चाहडपुरतो निजप्रतीतिदानाय ईदृशी श्रावणा सर्वनगरप्रत्यक्षं विहिता । यदहमामरणान्तं युष्मदावासेऽथान्यत्रापि दासीकर्म कुर्वाणा चौरिकां करोमि, गृहमध्ये पतितमथ शून्यं दृष्टं वस्तु गृह्णामि, अथ सुभिक्षे सञ्जाते पलायनं कृत्वा अन्यत्र क्वापि व्रजामि, अथ यौवने केनापि विप्रतारिता प्रलोभिता सती निर्गत्य व्रजामि, अथ कूटकपटवंचनद्रोहादिकं युष्मद्वैरिणा सह मिलित्वा करोमि कारापयामि, ततोऽहं अस्य लिखितपत्रस्य प्रमाणेन केशेष्वाकृष्य बन्धनताडनादिकं च कृत्वा पुनरपि दासीकर्मणि नियोजनीया । अहमहर्निशं सर्वकालं समस्तयुष्मत्कुटुम्बस्यादेशं करिष्ये । अथ कदापि परिपूर्णा सती कुटिलबुद्ध्या सर्वं समादिष्टं दासीकर्म न करोमि ततो भवद्भिः पादप्रहारैर्यष्टिप्रहारैश्च यदृच्छया व्यापाद्यमाना म्रिये । ततो मम निजः स्वामी अनागत एव निर्दोषः कृतोऽस्ति । चातुर्वर्ण्यलोकैः सर्वैरवधारणीयं यदहं स्वकर्मवशाद्दैवहता मृतास्मि । मत्स्वामिनः पुत्रपौत्रकलत्रादिपरिवारसहितस्य गङ्गास्नानम् । अथ कदाप्युदरबाधां करोमि, कूपतडागविषभक्षणादिना म्रिये, ततोऽपि मया पञ्चमुखनगरविदितं निजस्वामी निर्दोष एव विहितोऽस्ति । अहं कृतपूर्वकर्मविपाकेन दैवहता मृता । मत्प्रभोः सपरिवारस्य गङ्गास्नानमेव । इहार्थे पञ्चमुखनगरविदितं आमरणान्तं दासीकर्मणि रहणाय

अमुकामुकाधिवासब्राह्मणपञ्चकुलमहाजनविदितं साथीयासाभिज्ञानसहितं स्वहस्तेन प्रदत्तमतम् । पञ्च साक्षिणश्च ॥

C पूर्विकासंवत्सरादि पूर्ववत् । कस्मादपि स्थानात् कस्यापि सुता स्वकर्मभिः प्रेरिता अमुकनाम्नी द्वादशवर्षप्रमाणा गौरवर्णा लम्बकर्णा मृतभर्तृका उत्सन्नपितृमातृश्वशुरज्येष्ठदेवरोभयबन्धुवर्गा अनाथा कृष्णाक्षी तीक्ष्णनासा उच्छन्नकेशा नातिदीर्घा नातिन्हस्वा अविकलसकलेन्द्रिया एवंगुणोपेता प्रत्यक्षा एव वर्तते । तदनया दास्या अद्यदिनादारभ्य स्वजीवितान्तं यावत् ग्राहकअमुकाकगृहे अस्य वादेशेन अन्यगृहे अन्यपरिवारे खण्डनपेषणरन्धनसम्मार्जनोपलेपनपानीयोद्वहनकर्षणहस्तपादप्रक्षालनखालकुण्डिकोल्लुञ्चनकृषिपाशुपाल्यदूरासन्नगमनमित्यादिगृहक्षेत्रखलकादीनां समस्तानि कर्माणि दिवा रात्रौ वा शीतातपादिक्षुधापिपासार्दितदासीत्वं करणीयम् । तदियं नवनवत्याचारेण मूल्यक्रीता दासी ग्राहकेण अड्डाणके मोक्तव्या । धर्मेण दातव्या । अथ स्तोकबहुद्रव्याकाङ्क्षया परदेशे वा प्रहित्य प्रवहणके चटाप्य परद्वीपे प्रस्थाप्य द्रव्येण वस्तुप्राभृतकेन वा विकेतव्या । यत् रोचते प्रभवे भासते तत्करणीयम् । एतस्या दास्या जन्मग्राहकअमुकाकस्य एव एतदीयमानुषाणामपि स्वाधीना इति सती दासीपदे विक्रीयमाणा दुष्कर्मणः प्रमाणेन आत्मसक्तयौवनोद्धता केनापि विप्रतारिता द्रव्यलिप्सया पितृमातृभ्रातृप्रभृतिस्वजनानां प्रीत्या वा ग्राहकअमुकाकस्य गृहात् सर्वप्रकारं प्रणश्य यदि गच्छति तदा हस्तस्थितपत्रेण ग्राहकअमुकाकेन राजकीयशिक्षायामधस्तादपि पातयित्वा केशादिकेष्वाकृष्य तदनु ग्रहणबन्धताडनादिशिक्षां विधाय पुनरपि दासीकर्मणि नियोज्या । अथ एषा दासी बहुकर्मणा········ । अद्यदिनाऽनन्तरं ग्राहकअमुकाकेन पुत्रपौत्रपरंपरया अस्या दास्याः स्वामित्वं करणीयम् । अद्यदिनादारभ्य आजन्ममरणान्तं यावत् ग्राहकअमुकसक्तपितृभ्रातृभ्रातृपितृव्यकस्वजनबन्धुवर्गप्रभृतीनां लागभागो नहि । बालेपि वृद्धा ग्रन्थिर्नहि ।

## विभङ्गपत्रविधिः—

A सं० १२८८ कार्त्तिकशुदि १५ गुरावद्येह यथावर्त्तमानराजावलीपूर्वं विभङ्गपत्रमभिलिख्यते यथा । यत् पितुः परलोकं प्राप्तस्यानन्तरं चत्वारो भ्रातरः पृथग्धना जायन्ते । तदेभिश्चतुर्भिर्भ्रातृभिः नैजायमानैः प्रथमं पितृऋणं राजकीयदेयं देवसंबन्धि स्वजनसंबन्धि देयं तथा व्यवहारकाणां च देयं सर्वमेवात्राङ्कं विधाय समग्रगृहवार्त्तायां मणिमाणिक्यप्रवालमुक्ताफलटङ्कनाण॰

कसुवर्णरूप्यमयमाभरणं तथा सप्तधातुमयमपरं च घटितमघटितं भूमिगतं ब हिःस्थितं च राच्छपोच्छादिकं तथा गोधूमजोवारिमुद्गमाषव्रीहितिलतूवरि-झालरचुलामालमसूरसरसवप्रभृतिधान्यानि गुडखंडघृततैलमधुप्रभृतिस्नेह-रसास्तथा अश्वोष्ट्रमहिषीगोअजाखरगाडरप्रभृतिचतुष्पदधनं क्षेत्रखलसंबन्धि लांगडिपाटगडाछकडावाहिनीप्रभृतिवाहनानि तथा पावडाकुहाडाकुदालाकु-सिदात्रलोहडीतावाप्रभृतिलोहमयं वस्तु हललाङ्गलप्रहणिदीवडाप्रभृतिकृपक्षे-त्रोपकरणानि भाजनटांवाटीसयकांसीयाप्रभृतिकांस्यमयानि राच्छानि तथा कडाहितांबडीप्रभृतिताम्रमयानि तथा देघीपडघाहींडोलीटकडाभृंजारांधूपहड-पालभृंगारप्रभृतिपित्तलमयानि भाण्डानि च कांस्यताम्रपित्तलवटलोमयं समग्रं वस्तु तथा घण्टीनीशाउदूषलमुसलचुकीवटसेजवटप्रभृतिगृहमण्डनादि राछ-पोछादिकं सर्वं कांजिकाधानीबीजमर्यादीकृत्य अपरं मृण्मयं कुंभर्णा-गुह्राकोठीप्रभृतिकं च सर्वमित्यादिगृहवार्त्ता कुटुंबवृद्धैर्ज्ञातिमुख्यैश्च चतु-र्भिर्जनैर्विचार्य निच्छद्मवृत्त्या पञ्चभिर्विभागैर्विभज्य प्रदत्ता । एको विभा-गो मातुः प्रदत्तः । अवशिष्टाश्चतुरो विभागाश्चतुर्णां भ्रातॄणां प्रदत्ताः। अथ कदाऽपि एकः सुतः सुता वा अविवाहिता भवति, ततः साध्यगृहवार्त्ता-मध्यात् कुटुंबवृद्धानां चतुर्णां मुखेन तेषां पाणिग्रहणोपक्षयः पञ्चभिरपि विभागादेशैः सम एव जनन्या हस्ते दातव्यः । माता निजमनोहार्या यस्य सुतस्य मध्ये रहति तेन निजगोत्रदेवीवत् निजमातुर्भक्तिः कार्या । तथा मातुर्जातु विपत्त्यां और्ध्वदेहिकक्रिया एकादशद्वादशाहप्रभृतिका समस्ता तथा संवत्सरं यावत् दीपदानमासिकषाण्मासिकसांवत्सरं निजकुलाच[illegible]त्या नवाहपक्षमासत्रिपक्षादिक्रियाः सर्वा मातृविभागग्राहकेन सुतेन श्रद्धापूर्वं प्रतीतिसहितं सर्वं स्वर्गस्थितमातुः श्रेयोऽर्थं कर्तव्यम् । तथा मातुर्विपत्तेर-नन्तरं अपरिणीतबान्धवभगिनीनां विवाहार्थं रहापितपञ्चविभागमध्येऽन्य-द्रव्यं चतुर्भिः कुटुंबवृद्धैः पर्यालोच्य सुशीलस्य श्रद्धापरस्य स्नेहवतोऽव्य-सनिन एकस्य सुतस्य हस्ते दातव्यं, यथा स पितृवत् महाचिन्तापरस्तेषां विवाहं करोति । तथा एभिः सर्वैरपि बान्धवैः पृथग्भूतैः निजनिजविभागा-दत्तद्रव्यं व्यवसायेन वर्धनीयम् । अथ व्यसनैर्भक्षयित्वा न त्रोटनीयम् । तथा सर्वे भ्रातरः पृथग्भूताः स्वीयस्वीयकर्मभाग्यवशात् नवीनं द्रव्यं लक्षसंख्य-या उपार्जयन्तु । अथवा अग्रीकमप्यामूलं भक्षयन्तु । पुनरात्मनां मध्ये पर-स्परं कस्यापि ऋद्धिमतो बान्धवस्य समं हीनवित्तेन बान्धवेन तृष्णाभिभूतेन

वादविवादः कीदृशोऽपि न विधातव्यः। परस्परं भागविभागः कीदृशोऽपि नहि। तडागेऽपि पानीयं साध्यं नहि। परस्परमात्मनां मध्ये केवलं जातमृतसूतकेन गृह्यते। अन्यः कोऽपि भागसंबन्धो नहि। परस्परमेकस्य व्यवहारेणापि न गृह्यन्ते। आत्मीयकृतकर्मणा सर्वेऽपि गृह्यन्ते। अथ चतुर्णां भ्रातृणां मध्यादेकः कोऽप्यात्मीयविभागात् द्रव्यं भक्षयित्वा अपरेषामृद्धिमसहमानो गृहवार्त्तायाचनाय कूटकपटं कुरुते स कुटुंबवृद्धैः तथा परपुरुषैः दापावितरक्षपालैश्च चतुर्भिर्जनैः लिखितविभङ्गाक्षरप्रमाणेन विधिलोपकर्ता निवारणीयः। इहार्थे समस्तभ्रातृणां तथा यथाज्ञातीययथानामदापावितरक्षपालानां पृथक् स्वहस्तेन दत्तमतानि। तथा ज्ञातिवृद्धानां विभागकर्तॄणां चतुर्णामपरेषां च बहूनां पत्र लिखितसाक्षिवादसहितं विभङ्गपत्रं प्रमाणमिति॥

II B संवत् १२८८ वर्षे वैशाखशुदि १५ सोमे अद्येह बाल्हुआग्रामे श्रेष्ठी अमुकाकस्तथा सुतअमुकाकः अनयोर्विभङ्गपत्रमभिलिख्यते। पूर्वपुरुषोपार्जितहेमरूपनाम्रादिकं तथा कर्प्पूरकस्तूरीकुङ्कुमादिकं तथा पट्टकूलशणादिकं तथा जोवारिकरडिगोधूममुद्गउडदादिकं तथा घोटकोष्ट्रमहिषीगोबलीवर्दादिकं जीवधनं तथा दासदासीप्रभृतिकं तथा गृहोपस्करखट्वादिकं राछपोछादिकं च गोत्रजबृहत्पुरुषैरन्यैश्चास्य नगरप्रवीणैः अमुकनामभिरुभयाभ्यर्थितैः कार्यकारणबाह्यन्यायपूर्वमेतत्पाश्चात्यलिखितवस्तुप्रभृतिकं अनयोरपि विभज्य समर्पितम्। उभावपि सम्बुद्धौ। उभाभ्यामप्यात्मीयात्मीयपक्षात्प्रतिभुवौ दत्तौ। अद्यदिनानन्तरमुभाभ्यामप्यात्मीयविभाग उपार्ज्य वर्तनीयः। पूर्वोपार्जितादिविषयेऽन्योन्यं केनापि कस्यापि सन्मुखं नावलोकनीयम्। पूर्वोपार्जनादिविषये परस्परं लागभागो नास्ति। तडागेऽपि साध्यं पानीयं नास्ति। अस्योपरिलिखितविधेः पालनायोभयोरपि कलहनिवारणाय दत्तप्रतिभूः श्रे०अमुकाकस्तथा द्वितीयपक्षाद्दत्तप्रतिभूः श्रेष्ठी अमुकाकः। अत्र मतानि अत्र साक्षिणः। लिखितमिदमुभयाभ्यर्थितेन समस्तकुटुम्बविदितं अमुकाकेनेति प्रमाणम्।

## गर्दभपत्रविधिः—

A सं० १२८८ वर्षे वैशाखशुदि १५ गुरावद्येह यथासन्तिष्ठमानराजावलीपूर्वं गर्दभपत्रमभिलिख्यते यथा। यत् कस्यचित् साधुवृत्तविप्रस्य न्याये वर्तमानस्यैव केनाऽपि पिशुनेनास्य विप्रस्य ऋद्धिं प्रसिद्धिं चासहमानेन विप्रस्य दण्डापनाय श्रीमद्राजकुले सत्यानृतनिरूपणानि जल्पितानि। ततो

राजादेशो धर्माधिकरणीयपण्डितानां निर्णयार्थं सञ्जातः । ततस्तैः पण्डितैर्विज्ञातं राज्ञो यद्वयं विप्रेणानेन दत्तं गर्दभपत्रं विना न्यायं न कुर्मः । तदनु तेन साधुविप्रेणोक्तं यद्यहं धर्माधिकरणीयपण्डितानां राजकुलस्य च न्यायं कुर्वतां उत्पन्नाधिना जातसन्तापेनाभिघातं करोमि , ततो गर्दभचाण्डालन्यायेन म्रिये । धर्माधिकरणपण्डितानां राजकुलस्य च गङ्गास्नानमेव । इहार्थे उपरिलिखितपत्रविधेर्निर्वहणाय स्वश्वासंरक्षणाय च मोढेरामहास्थानीयदुवेरामस्तथा डीसामहास्थानीयत्रिवाडीआलश्रमउभौ विप्रौ रक्षपालौ समग्रपत्रलिखितविधेर्निर्वाहं कुरुतः । इहार्थे धर्माधिकरणे न्यायविचारार्थं आनीतविप्रेण स्वहस्तेन दत्तमतं, तथा अन्तरस्थरक्षपालविप्राभ्यां स्वहस्तेन प्रदत्तमतानि च । तथा तन्नगरनिवासिनां चातुर्वर्ण्यलोकानां साक्षिवादाश्च । साधुविप्रेण तथा रक्षपालविप्राभ्यर्थितेन पारथीजयताकेन लिखितमिदं गर्दभपत्रं हीनाक्षरमधिकाक्षरं वा प्रमाणमिति ॥

B संवत् १२८८ वर्षे वैशाखशुदि १५ सोमेऽद्येह श्रीबालूआग्रामे गर्दभपत्रमभिलिख्यते यथा ॥ कस्यचित्साधुब्राह्मणस्य ऋद्धिं प्रसिद्धिं चापि पिशुनेनासहमानेनालीकं चटापितम् । अथ दैववशादभाग्येन लोकमध्ये एतदेवाकाशात्पतितम् । तस्योत्तारणाय श्रीमद्राजकुले गत्वा शुद्धिं ययाचे । ततश्च धर्माधिकरणीयपण्डिता गर्दभपत्रं समर्पयन्ति । यद्यहं धर्माधिकरणीयब्राह्मणानां न्यायं कुर्वतां किमपि आत्मघाताद्यस्थानं करोमि, तदा गर्दभचाण्डालन्यायेनात्मघातकत्वेन म्रिये । धर्माधिकरणपण्डितानां राजकुलस्यैव गङ्गास्नानम् । अस्योपरिलिखितविधेः पालनाय अकरणनिवारणाय दत्तप्रतिभूः । अत्र मतानि । अत्र साक्षिणः । लिखितमिदम् ॥

## शीलपत्रविधिः—

A सं० १२८८ वर्षे वैशाखशुदि १५ गुरावद्येह यथासन्तिष्ठमानराजावलीपूर्वं श्रीवर्धमाननगरे अधिकारिश्वेतमन्त्रिपञ्चकुलविदितं राज०जगसींहराज०वीरमदेवौ डेडाद्राग्रामीयसीमायाः सन्धिलग्नक्षेत्रविषये परस्परं जातवैरे सभासद्भिः उभयोरपि भाषोत्तरं विचार्य मिलितावपि संबोधितौ । तदनु सभ्यैरुभयोरपि शीलपाला याचिताः यदद्यदिनादूर्ध्वमुभाभ्यामेकपितृमातृजातन्यायेन वर्त्तनीयम् । मत्सरस्थानं केनाऽपि न चिन्तनीयम् । सांप्रतं मर्यादां कृत्वा दत्तग्रासेन मिलितैरपि परमः सन्तोषः कार्यः । उभाभ्यामपि स्वीयपक्षात् दत्तशीलप्रतिभूराठोडजोगमसुतरा०चरकाकः तथा द्वितीयो

वाघेलाभाडमलसुतराज०चित्राक एतावुभावपि लिखितपत्रमर्यादायां शीलरक्षकौ जातौ । यदि संप्रत्यनन्तरं राज०जगसीहराज०वीरमदेवौ डेडाग्रा-ग्रामीयसीमासन्धिलग्नपूर्वविवादयुक्तभूमीमर्यादायाः सभासद्भिर्निर्णीतविधिना यथाकृताघाटविधिलोपं कुरुतः तदा मिलितावपि राजग्राह्यौ दण्डसाध्यौ भवतः । तथा एताभ्यां विनाशस्य समग्रस्य निर्गमं श्रीराजकुले राज०चरका-करा०चित्रकौ शीलयतः । एकेन द्वौ द्वाभ्यामेकः । एकेन हस्तप्रासेनापरस्य उत्तरो न विधेयः । समग्रविनाशः शीलनीयः । इहार्थे राजजगसींहवीरमयोः स्वहस्तेनाभिज्ञानसमं प्रदत्तमतानि । तथा रक्षपालरा०चरकाराज० चित्राक-योः कटारीसाभिज्ञानेन स्वहस्तेन लिखितमतानि । सभायां सन्तिष्ठमानमुख्य-साक्षिपञ्चकं च । पत्रमिदमुभयाभ्यर्थितेन लिखितं पारथीजयताकेन । हीना-क्षरमधिकाक्षरं वा प्रमाणमिति ॥

II B संवत् १२८८ वर्षे वैशाखशुदि १५ सोमेऽद्येह वालूआग्रामे शील-पत्रमभिलिख्यते यथा । अमुकग्रामवास्तव्यराज०अमुकाकः तथा अपरग्राम-वास्तव्यराज०अमुकाकः इमौ क्षेत्रैकस्य विषये कुटुम्बविषये परस्परं सञ्जातवैरौ अमुकग्रामीयरा०अमुकाकेन सम्बोध्य एकत्रोपवेशितौ । ततश्चोभाभ्यामप्येक-मतीभूय शीलपत्रमकारि । अद्यदिनपूर्वमावाभ्यामेकमातृन्यायेन वर्त्तनीयम् । मत्सरस्थानं केनापि न कार्यम् । स्वकीयग्रासेन सन्तोषो विधेयः । केनापि परकीयग्रासस्य स्पृहा न कार्या । उभाभ्यामपि निजपरस्परं शीलप्रतिभूः राज० अमुकाकः तथा लिखितविधेः पालनाय भ्रूसञ्ज्ञया चक्षुःसञ्ज्ञया वा व्यभिचा-ररक्षणाय दत्तान्तराप्रतिभूः । उभयोः देवश्रीवैद्यनाथपत्रमुत्पाटितम् । अत्र मतानि । अत्र साक्षिणः । लिखितमिदमुभयाभ्यर्थितेन पारि० अमुकाकेन प्रमाणमिति ॥

## समयपत्रं तथा—

B संवत् १२८८ वर्षे वैशाखशुदि १५ सोमेऽद्येह वालूआग्रामे समयपत्र-भिलिख्यते यथा । अमुकग्रामीयसमस्तब्राह्मणानामन्योन्यं मध्यादेकस्य कस्यापि विभूतिं लब्ध्वा कोऽपि केनापि द्विजेन समं विग्रहं प्रारभते तदा तस्य द्विजस्य सर्वैरपि द्विजैरात्मीयशम्बलेन साहाय्यं कार्यम् । राणकराजकुलेन स्वीयशं-बलेन कार्यम् । अमीषां मध्यात्कस्यापि पिशुनस्य मिलित्वा केनापि भाषाभेदो न कार्यः । अमीषां मध्याद्यः कोऽपि परपक्षैः मिलित्वा भ्रूसञ्ज्ञया चक्षुःसञ्ज्ञया वा राजकुलभाषाभेदं करोति, तदा ब्रह्मघाती लिङ्गभेदी ब्रह्महत्यादिदोषेण

गृह्यते इत्यर्थे प्रत्येकं सर्वब्राह्मणानां जन्मसुकृतम् । तथा श्रीदेवे दिव्यपूर्वं पत्रमुत्पाटितम् । अत्र मतानि । अत्र साक्षिणः । लिखितमिदं उभयाभ्यर्थितेन पारि० अमुकाकेन प्रमाणमिति ॥

## यमलपत्रं यथा—

B संवत् १२८८ वर्षे वैशाखशुदि १५ सोमेऽद्येह श्रीमद्विजयकटके महाराजाधिराजश्रीमत्सिंहणदेवस्य महामण्डलेश्वरराणकश्रीलावण्यप्रसादस्य च संराजकुलश्रीश्रीमत्सिंहणदेवेन महामण्डलेश्वरराणश्रीलावण्यप्रसादेन पूर्वरूढ्याऽऽत्मीयात्मीयदेशेषु रहणीयम् । केनापि कस्यापि भूमी नाक्रमणीया । उभयोर्मध्याद्यः कोऽपि बलिष्ठः शत्रुणा गृह्यते तदा तस्य शत्रोरुपर्युभाभ्यामपि कटकं कर्तव्यम् । अथ च शत्रुदण्डाधिपो गृह्णाति, तदा दलेन संवाहना कार्या । यदुभयोरपि देशयोर्मध्यात्कोऽपि राजपुत्रः किमपि विनाश्यापरदेशे प्रविशति तदा स्वदेशे केनापि स्थानं न दातव्यम् ॥ अन्यत्र विनष्टं समारोपणीयम् । लिखितविधेः पालनाय व्यभिचाररक्षणाय दत्तप्रतिभूः । दत्तान्तरं देवश्रीवैद्यनाथपत्रमुत्पाटितम् ॥

## ढौकनपत्रं यथा—

B स्वस्ति । श्रीपत्तने महामात्यश्रीअमुकाकः इहैववास्तव्यमे रचाइंआकस्य ढौकनाक्षराणि प्रयच्छति यथा । यन्मेहरलूंणीयाकेन कुलं कुटुम्बं कृत्वा स्वसुता चांइआपार्श्वान्मोचापिता । ततो गतदिवसे मेहर आकेन कुटुम्बसमवायेन आत्मीयस्वजनलोकविदितं आभीरधउलीआकाय ढौकनव्यवहारेणादायि स्वसुता । ढौकनपत्रं राजकुलाद्गृहीतम् । अतः कालान्तरेऽपि पूर्वभर्त्रा कस्यापि कस्यापि सन्मुखं नावलोकनीयमिति संवत् १२८८ वर्षे वैशाखशुदि १५ सोमे । मतं श्रीः ॥

## उत्थानपत्रिकाविधिः—

A स्वस्ति । श्रीवर्धमानमण्डलकरणात् महाराजाधिराजश्रीसारङ्गदेवविजयिनां महामात्यश्रीआलिगपादानामादेशात् व्यापारनियुक्तश्रीकरणचांडसींहपञ्चकुलं जांबूग्रामे लभ्यराजकीयद्रम्माणां संबन्धे विलहितठ०मालदेवसमं भट्टपुत्र ८ समस्तभट्टपुत्राणां ठ०मालदेवस्य च उत्थानपत्रिकां प्रयच्छति यथा । यत् राजादेशप्रमाणेन राणाखेताकेन जांबूग्रामीयसमस्तराजकीयपदार्थानां लभ्यद्रम्माणां शोधनं भण्डारीनागडसमं विहितम् । भण्डारी-

नागडेन अस्माकं पुरतः श्रीराजकीयसमस्तपदार्थानां लभ्यद्रम्माः भांडागार-प्रविष्टाः मानिताः विशुद्धिसहिताः । अतो भवता समस्तविलहितभट्टपुत्रैः समं दृष्टादेशेन इहागन्तव्यम् । तथा विलहितभूर्जपत्रस्य प्रथमदिनादारभ्य अद्यदिननिरूद्धं प्रहितउत्थानपत्रिकाप्रमाणेन चटितदिनानां कणभक्तकानि तथा यथालिखितभूर्जद्रम्मान् अपि विशुद्धिसहितान् नीत्वा सपदि आगन्तव्यम् । इहार्थे दृयके स्वयमादेशः । साभिज्ञानश्रीकारोऽवगन्तव्यः ॥ सं० १२८८ वैशाखवदि १३ सोमे उत्थानपत्रिका प्रमाणम् ॥

## कृष्णाक्षरउज्वलाक्षरविधिः—

A सं० १२८८ वैशाखशुदि १५ गुरावद्येह यथावर्त्तमानराजावलीपूर्वं कृष्णाक्षराणि लिख्यन्ते यथा । यत् संघवीपदमसुतपूनाकः अन्यायेन विचरमाणो भणित्वा राजकुले आनीय पितृमातृभ्यां समस्तकुटुम्बसमेताभ्यां समस्तश्रीपत्तनाधिवासिनां पञ्चमुखब्राह्मणानां विदितं तथा पञ्चमुखनगरस्य महाजनसमक्षं च ईदृशं प्रघोषं जल्पित्वा पूनाकः कालाक्षरितः यत्संप्रति पश्चादेतदीयकृतान्याये पितृभ्रातृपितृव्यकभ्रातृपुत्रप्रभृतयः तथा समस्तगोत्रिणो दायादा अन्ये राजग्राह्या न भवन्ति । अस्याचरितानाचारेणास्माकं राजग्रहो राजदण्डो न पातयितव्यः । अद्य दिनात् यद्यसौ बहुनपराधान् कुरुते, अथ भाण्डागारं विदारयति, अथ पाटहेडाहेतोः शस्त्रघातं विदधाति, अथ नगरमध्ये कस्याऽपि विप्रक्षत्रियसाधुव्यवहारकप्रभृतीनां महिलां सुरूपां दृष्ट्वा दूतिकामुखेन द्रव्यलोभं दर्शयित्वा विप्रतार्य गृह्णाति, अथ बाह्ये गता सती बलादेवाकृष्यादाय क्वाप्यन्यत्र बाह्यग्रामे देशान्तरे वा व्रजति, अथ मार्गे वहमानवच्छीवित्तवणिज्याकारादीन् वित्तलोभवशात् व्यापादयति, अथाखाद्यखादनमपेयपानमवध्यवधमगम्यागमनमनाचारं साधुलोकविरुद्धमाचरति, ततोऽप्यस्य समस्तलिखितापराधैः अन्यैरपि प्रचण्डदूषणैराचरितैर्दुश्चरितैरसंभाव्यैः अपिवाहितैः अस्य पितृवर्गीयभ्रातृवर्गीयस्वजनसंबन्धिगोत्रवर्गदायादवर्गादिष्टमित्रादिः कोऽपि राजकुले दण्डसाध्यो न भवति । एतस्य कृतापराधैः एष एव दण्डसाध्यो निग्रहणीयः । प्राणान्तिकमपि प्रापणीयो भवति । अस्य उल्लिखितकुटुम्बवर्गः स्वजनवर्गश्च अस्य कृष्णाक्षरितस्य जातमृतसूतकेन न गृह्यते । अपरं यद्दिनानन्तरं यदि पूर्वस्नेहेन तद्वर्गमध्यादस्य कृष्णाक्षरितस्य प्रच्छन्नं आच्छादितं गुप्तं प्रकटं स्थानदानरहणभोजनाच्छादनादिकं गुप्तं प्रकटं वा ददाति स एव राजकुले दण्ड-

साध्यो भवति। अथ कस्याप्यन्यस्य पार्श्वादक्षिसंज्ञया भ्रूसंज्ञया वा तस्यान्यायिनो भोजनाच्छादनद्रव्यादिकमुपायान्तरेण ददाति दावापयति स तस्य कालाक्षरितस्य पार्श्वादधिको अन्यायी भणित्वा राजकुले निग्रहणीयः। अथ कदापि कुटुंबेन परित्यक्तः कष्टं सहमानः क्षुत्पिपासार्दितश्चित्तेऽनुशयं विचिन्त्य कालान्तरेण सानुकूलदैववशात् पुनरपि साध्वाचारे समायातो भवति, कुटुंबस्य मिलनायाभिलाषं कुरुते, तथा एतदीयकुटुम्बमपि सदाचारे प्रवर्त्तमानं लोकोक्त्या स्वयं च परिभाव्य पुनरपि कुटुम्बमध्ये प्रवर्त्तमानं कर्त्तुमिच्छति, ततः कुटुम्बवर्गेण स्वजनवर्गेण चासौ निजमनोहार्यो कुटुम्बमध्ये वर्त्तमानो न विधेयः। तद्वर्गीयैः पितृमातृपक्षीयैः सर्वैरपि स्वजनवर्गेण च राजकुले यात्वा स्वामिनो निजविभवानुरूपं माङ्गलिक्यं किमपि दत्वा परिवारं च सन्तोषयित्वा यथोचितं राज्ञो विज्ञाप्य समस्तनगराधिवासविदितं लिखितकृष्णाक्षराणि विदारयित्वा पुनरेवाधिवासविदितं स्वामिनोऽग्र उज्ज्वलाक्षराणि धर्माधिकरणे लिखाप्य अग्रेकृतापराधानां विषये स्वामिनः पार्श्वात् पृष्ठौ हस्तं दावाप्य पुनरपि सदाचारो भणित्वा पञ्चमुखनगरविदितं कुटुम्बमध्ये उज्ज्वलाक्षरैर्हस्तगतैर्व्यवहरमाणः कर्तव्यः। अथ नगरमध्ये अग्रेकृतानेकापराधैः कस्याप्युपालम्भयोग्यो न भवति। इहार्थे धर्माधिकारसभासदां पुरतः सर्वेषां स्वहस्तेन दत्तमतानि। तथा बहवः सा[illegible]णश्च कर्तव्याः। इत्यादि अक्षराणि धर्माधिकरणनियोगिनां दत्वा तस्य [illegible]लाक्षरितस्य मातृपितृभ्यां उपरिलिखितविधिना तस्य कृतापराधानां निग्र[illegible]षेधार्थं अभयदानाक्षराणि राजमुद्राङ्कितानि सन्मुखानि ग्रहीतव्यानि। [illegible]था उज्ज्वलाक्षराणि ग्राह्याणि। अनेन विधिना कृष्णाक्षरउज्ज्वलाक्षरप्रबन्धः।

## दानमण्डपिकापत्रविधिः—

A संवत् १२८८ वर्षे वैशाखशुदि १५ सोमेऽद्येह श्रीमदणहिल्लपत्तने यथासन्तिष्ठमानराजावलीपूर्वं महामात्यश्रीआलिगपञ्चकुलं श्रीनुसारीपथके समस्तमाण्डवीपथकीयाकानां प्रतिसारिणां उपरहींडीयाप्रभृतीनां सर्वेषां दानसंबन्धिकानां समादिश्यते यथा। यत् षष्ठ्यधिकशतक्रियाणकालङ्कृतमुखेन प्रागुनिस्साररीतिप्रमाणेन आगमनिगमदानं वच्छीवित्तानां पार्श्वात् ग्रहीतव्यम्। अरीतिरयुक्तिः काऽपि वच्छीवित्तानां समं न व्यवहरणीया। विकरपदानि च प्राग्रीतिप्रमाणेन ग्राह्यानि। प्रतीसारकैः क्षिप्राभाव्याः ऊर्ध्वमधिकं किमपि न ग्रहीतव्यम्। पाग्रीते ऊर्ध्वमनाचाराः केऽपि न

कार्याः । यदि वच्छीविस्तान् दूहवित्वा अयुक्त्या किमप्यधिकं दानं गृह्यते तथा दानसत्कद्रम्माणां लभ्यानां बलात् वच्छीविस्तानां पार्श्वात् पण्यग्रहणं किमपि निजमनोहार्या गृह्यते तदा देशान्तरभाण्डानामप्रवेशकरणं वच्छीविस्तैर्दूहवितै-र्जायते । मार्गोऽपि सुन्दरो न वहति । इति मत्वा मार्गे वहमानविणजारावच्छी-विस्ताश्च मानपुरःसरं सुन्दरेणावर्जनीयाः । तथा अग्रतः पार्श्वात् श्रीपत्तनमालव-कस्यान्तराले मण्डलकरणेषु राउलराणकप्रभृतीनां व्यापारिणां वच्छीविस्तानां पा-र्श्वादन्यायेन बुलारामिषेण कोऽपि किमपि याचते स निषेधनीयः । नो वा श्रीअस्माकं सुव्यक्तं विज्ञाप्यम् । अत्रार्थे श्रीकारमुद्राङ्कितं लिखितं प्रमाणम् ॥

## हस्ताक्षराणि यथा—

A सं० १२८८ वैशाखशुदि १५ गुरावद्येह यथासन्तिष्ठमानराजावली-पूर्वं हस्ताक्षराणि लिख्यन्ते यथा । धनिको नाम नामतः श्रीपत्तनवास्तव्य-श्रीमालज्ञातीयव्य०जगसीहसुतपूनाको लाभाय स्वधनं प्रयुङ्क्ते । अस्य च हस्ता-द्धारणिको नाम नामतः । इहैववास्तव्यनागरज्ञातीयमहं०मालासुतपूनाकेन स्वी-यसमुत्पन्नप्रयोजनवशात् श्रीश्रीमालीयखरटङ्कशालाहतत्रिःपरीक्षितकणसुव-र्णहट्टिकायांव्यवहरमाणश्रेष्ठजीर्णविश्वमल्लप्रियगृहीतोद्धार द्र० ५०४ चतुरधि-कपञ्चशतानि द्रम्मा व्य०पूनसीहपार्श्वात् गृहीताः । अमीषां द्रम्माणां व्या-जेन मासं शतं प्रति द्र० २ चटनः । अमी द्रम्माः चटितव्याजसहिताः कलिकावलिकुचटवर्जं निर्विवादा मया अष्टप्राहरिक्या एकमुष्ट्या व्य०पून-सीहस्य देयाः । अमीषां लिखितपत्रप्रमाणेन सव्याजकद्रम्माणां दावापनाय स्वयं ग्रहीतारौ इव दावापितप्रतिभूर्गूर्जरज्ञातीयवा०मोखासुतपूनाकस्तथा ओसवालज्ञातीयमहं० रतनसुतमहं०राजड उभौ प्रतिभुवौ दापितौ ॥ एकेन द्वौ द्वाभ्यामेकः । धुरप्रतिभुवोरन्तरं नहि ॥ एकेन प्रतिभुवा हस्तप्राप्तेन द्वितीयस्यो-त्तरमकुर्वाणेन व्यवहारकसमं लिखितपत्रविधिर्धारणिकवन्निर्वहणीयः । इहार्थे मुख्यसाक्षित्रयविदितं धुरप्रतिभुवोः स्वहस्तेन दत्तमतानि । लिखितमिदमुभ-याभ्यर्थितेन पारथीजयताकेन हीनाक्षरं अधिकाक्षरं वा पत्रं प्रमाणमिति ॥

## सन्मुखहस्ताक्षराणि—

A सं० १२८८ वैशाखशुदि १५ गुरावद्येह श्रीपत्तने यथासन्निष्ठमानरा-जावलीपूर्वं सन्मुखहस्ताक्षराणि लिख्यन्ते यथा । यत् श्रीमालज्ञातीयमहं०पूना-सुतमालाकः इहैववास्तव्यगूजरमहं०कवणासुतपूनाकस्य सन्मुखहस्ताक्षराणि प्रयच्छति यथा । यत् मम पार्श्वात् व्यवहारेण महं०पूनाकेन व्याजसमेतगृहीतद्र०

४०० चत्वारि शतानि द्रम्माः सव्याजा यथालिखितपत्रविधिना जल्पितावधौ एकमुष्ट्या रोक्या एव प्रवेशिताः । अमीषां द्रम्माणां लिखितपत्रस्य पतितस्य निर्गमनस्य विषये मह०धरणासमं लागः सम्बन्धः कीदृशोऽपि नहि । अस्योपरिलिखितविधिपलापनाय समस्तखञ्चानिवारणाय च दावापितांतरस्थअमुकामुकज्ञातीयौ अमुकामुकनामानौ द्वौ रक्षपालौ मह० मालाकं मह० धरणासमं उपरिलिखितद्रम्माणां प्रवेशितानां व्यतिकरे वादविवादं कुर्वाणं निवारयतः । इहार्थे स्वहस्तेन धुरप्रतिभुवोः साक्षिसुजनपञ्चकसमं दत्तमतानि । प्रमा[illegible]नि ।

## स्वहस्ताक्षराणि यथा—

B संवत् १२८८ वर्षे वैशाखशुदि १५ सोमेऽद्येह वालूआग्रामे व्य०अमुकाकः अमुकाकसुतः स्वपितुः स्वकीयहस्ताक्षराणि प्रयच्छति यथा । यन्मया आत्मीयविभागस्याऽपि उद्धार्यव्यवहारार्थं स्वपितुः अमुकपार्श्वात् गृहीतद्र० ५०० पंचशतानि । यद्यहं स्वपितुः पार्श्वाद्भागं ग्रहीष्यामि तदा आत्मविभागात् पञ्चशतानि पातयिष्यामि । अस्य लिखितविधेः दत्तप्रतिभूः व्यव० अमुकाकः । अत्र मतानि । अत्र साक्षिणः । लिखितमिदममुकेन ।

## अभयाक्षराणि यथा—

B स्वस्ति । श्रीअमुकाकः अमुकस्थाने अमुकस्याभयाक्षराणि प्रयच्छति यथा । भवदुपरि श्रीमद्राजकुलस्य प्रसादं कुर्वतः श्रीश्रीकरणीयउद्धारद्रम्माः प्रसादेन मुक्ताः । अग्रीकसमस्तदोषाणां मटमटा सञ्जाता । श्रीमद्राजकुलेनास्माभिश्च भवत्पृष्ठे हस्तः प्रदत्तोऽस्ति इति मत्वा सत्वरमत्रागन्तव्यम् । शङ्कास्थानं किमपि न कार्यमिति ॥

## विधिपत्रम्—

C संवत् १५३३ वर्षे ज्येष्ठशुदि ८ भौमे अद्येह नरसमुद्रमण्डलकरणे मह० श्रीअमुकअमुकप्रभृतिपञ्चकुलप्रतिपत्तौ विधिपत्रमभिलिख्यते यथा । न्यायोपविष्टश्रे०अमुकप्रभृतिजन ४ श्रेष्ठिविषयकअमुकप्रभृतिजन ४ अमीषां अग्रतो माराग्रां (?) उभयपक्षोपक्षयादिकं अर्धार्धेन दातव्यम् ॥

## भाषोत्तरं यथा—

C ज्येष्ठशुदि ८ भौमे अमुकामुकेन लिखापितं यत् एतदीयसुतअमुकाकेन खलके क्षेत्रे च निशायां माषकणाश्चोरिताः । यदि चोरिता न भवंति, तदा अहं कारणं करोमि इत्यर्थे पञ्चाशद्दशगुणानां द्र० ५०० पणो मुक्तः ।

अस्य वचनपले वर्तमाने तेनैव प्रभुणा नियुक्तअमुकमण्डलकरणे महं०श्रीअमुकाकप्रभृतिपञ्चकुलप्रतिपत्तौ दायकग्राहकयोरेकमतीभूतयोरेकमतेन ॥

## आलापो यथा—

C पूर्विका पूर्ववत् । पञ्चकुलमालापं प्रयच्छति यथा । राज०अमुकाकेन अमुकग्रामस्य पूर्वरूढ्या पलमानदेवदायब्रह्मदायवर्जं संवत् १५३३ वर्षे आलापे देयद्रम्माः ४००० चत्वारि सहस्राणि दातव्याः ॥

## श्रीपत्रिका यथा—

C महं० अमुकाकवचनात् अमुकनाल्यां प्रतीसारकअमुकाकस्य लिख्यते यथा । लिखितव्यमिदम् । साहुअमुकाकसत्कमञ्जिष्ठाघोकडां ६० पूग छाट ४ खर्जूर वाडीयां ८ श्रीषंड गांठि १० । एतत् मोक्तव्यम् । ज्येष्ठशुदि ८ भौमे । मतं । ज्ञातम् ॥

## विक्रणपट्टको यथा—

C पूर्विका पूर्ववत् । पञ्चकुलं पट्टकं प्रयच्छति यथा । अमुकज्ञातीयअमुकउत्तअमुकाकेन पूर्वरूढ्या पलमानदेवदायब्रह्मदायवर्जं परम्परारीत्या सां०श्रावणाद्यं आषाढनिरुद्धं द्वादशमासान् परिकल्पितावधौ अथ यदि अधिकमासकं भवति तदा अधिकमासेन समं त्रयोदशमासान् परिकल्पितावधौ मण्डपिकापट्टके देयद्र० ६०००० षष्टिः सहस्राणि द्रम्माणां दातव्यानि । अत ऊर्ध्वं स्कन्धकव्यवस्था क्रियते यथा । सां०कार्तिकान्ते प्रदेयद्र० १०००० चैत्रान्ते देयद्रम्म ३०००० ज्येष्ठान्ते देयद्र० २०००० एवमनया रीत्या स्कन्धकत्रयेण व्यवस्थया द्रम्माणां सर्वविशुद्धिः करणीया । अथ यदि राजकदैवकवशात् स्वचक्रपरचक्रागमात् यावन्ति दिनानि उरन्दरो भवति तेषां दिनानां सत्कदिनपाटिकाः पट्टकाङ्कप्रमाणेन श्रीमद्राणकैः पातनीयाः । अस्य समस्तलिखितपत्रविधेः परिपालनाय द्रम्माणां दानाय दत्तप्रतिभूः अमुकउत्तअमुकाकः ॥

## चीठिका यथा—

C संवत् १५३३ वर्षे ज्येष्ठशुदि ८ भौमे श्रीचीठिका यथा । राजादेशात् अथ महन्तकअमुकवचनात् कोष्ठागारपञ्चकुलस्य लिख्यते यथा । पदातिअमुकाकस्य भाद्रमासीयकणभक्तसत्कजोवारि०॥। ३ आज्यं ०) १॥। अनया रीत्या कणभक्तसत्कजोवारि आज्यं च देयमिति । दू०स्वयमादेशः । दू० अमुकाकः ।

# लेखपद्धतिः

## II

D प्रणम्य शम्भुं गुरुपादपद्मं पत्रस्थितं लेखविचित्ररूढम् ।
कायस्थकण्ठस्य विभूषणार्थं विज्ञाय तत्त्वाङ्गमशेषमेषाम् ॥
विघ्नेशं भारतीं नत्वा भक्त्या वक्ष्यामि पद्धतिम् ।
लेखानां मुग्धबोधाय संश्रयं सर्वसम्पदाम् ॥
चतुःसागरपर्यन्ते सकले क्षितिमण्डले ।
देशो नास्ति विना राज्ञा न राजा लेखनं विना ॥
स्वस्तिशब्दं प्रसिद्ध्यर्थं मङ्गलार्थं च कारयेत् ।
क्षेमार्थं वाचकस्यापि तेनादौ लिखते बुधः ॥
श्रीकारमादितः कुर्यात्स्थाने प्राकारवेष्टिते ।
गुरोर्नृपस्य नामादौ मन्त्रिणां चाधिकारिणाम् ॥
मण्डलाधिपतेर्नाम्नि राज्ञो दारसुतादिषु ।
तथा गुरुप्रसादानां व्रतीशानां च युज्यते ॥
श्रीकाराश्च त्रयो मित्रे एकैकं पुत्रके तथा ।
षड् गुरौ स्वामिनः पञ्च द्वौ भृत्ये द्विगुणौ रिपौ ॥
स्वस्थाने पञ्चमी देया परस्थानेषु सप्तमी ।
आत्मनः प्रथमा देया द्वितीया च परस्य च ॥
लिखेदादौ महास्थानं पादपूज्यसमन्वितम् ।
लेखस्थानं लिखेत्पश्चात् आज्ञाविनयपूर्वकम् ॥
यः प्रस्थापयते लेखं तन्नाम सविसर्गकम् ।
ईकारान्तं स्त्रियाश्चापि एवं नाम विनिर्दिशेत् ॥
यस्य प्रस्थापयेल्लेखं कस्यापि चात्मनो बुधः ।
सानुस्वारं तु तन्नाम कुर्यादक्षरमन्तिमम् ॥
मातुलश्वशुरश्वश्रूस्वामिप्रभृतयश्च ये ।
पूज्यास्तन्नाम पादान्तं यदेतत्पूर्वकाग्रतः ॥
एकपुटे चातिदीर्घे रजोहीने च गुण्ठिते ।
त्रिभिर्वाचनिके लेखे नास्ति सिद्धिः करार्पिता ॥
स्वस्तिहीने रजोहीने शिरोनामविवर्जिते ।

अमुद्रे हस्तदत्ते च लेखे सिद्धिर्न विद्यते ॥
ग्रीवाग्रन्थिर्हरेद्राज्यं मध्यग्रन्थिश्च लेखकं ।
पृष्ठग्रन्थिर्हरेत्सर्वं निर्ग्रन्थ्या लेखनी(न्या)लिखेत् ॥
स्वस्त्याद्यमितिकारान्तं मध्ये कुशलसंयुतं ।
सरजश्च च समुद्रं च कागदं भूगतं शुभम् ॥

C ऊर्ध्वं यो युज्यते लेखः अधो या युज्यते विज्ञप्तिका । लेखलिखिताशीर्वादः राजादेशश्च ऊर्ध्वम् । तथा त्रिपंचसप्त श्रीकारा विज्ञप्तिकायां, लेख लिखिताशीर्वादराजादेशानामुपरि अभिधानं लिख्यते ।

## समस्तलेखलिखितविज्ञप्तिकादयो लिख्यन्ते यथा—

सर्वत्र यो यस्य पितृमातृवृद्धभ्रातृगुरुश्वशुरपूज्यवर्गः, तस्य योग्या विज्ञप्तिका प्रस्थाप्या। अन्यच्च । यो यस्य लघुः पदातिवर्गस्तस्य हेतोर्ज्येष्ठप्रतिपत्तौ तथा सामान्यप्रतिपत्तौ लिखितं प्रस्थाप्यमिति । तथा पितृमातृस्वसृभगिनीप्रभृतिस्त्रीवर्गेषु आत्मीयभ्रातृसुतप्रभृतिलघुवर्गयोग्य आशीर्वादः प्रस्थाप्यः । तथा यो यस्य सम एव तस्य योग्यप्रतिपत्त्या लेखः प्रस्थाप्यः ।

## श्रावकगुरुविज्ञप्तिका—

C & D स्वस्ति । श्रीपार्श्वजिनमानम्य अमुकनगरस्थाने विनिर्जितक्रोधादिकषायचतुष्टयारातीन् पूज्यपरमाराध्यतमोत्तमपरमपूजार्चनीयान् प्राणातिपातादिविरतिलक्षणपञ्चमहाव्रतपरिपालनोद्यतैकमानसान् व्याकरणच्छन्दोऽलङ्कारप्रमाणआगमचरित्रकथाकथानकसिद्धान्तादिसकलशास्त्रावगततत्त्वान् त्रिगुप्तिजननीपरिपालनवत्सलान् संसारसागरनिमज्जमानजन्तुपोततुल्यान् निरन्तरसदोपदेशप्रदानात्प्रतिबोधितानेकजन्तून् सुगृहीतनामधेयान् भट्टारकअमुकश्रीपादाम्भोरुहान् सपरिवारोपेतान् अमुकनगरात् सदादेशकारिश्रेष्ठिश्रावकअमुकाः तथा अमुकश्राविकाः द्वादशव्रतवन्दनकेनाभिवन्द्य सविनयं विज्ञपयन्ति यथा । विज्ञप्यमाह । पूज्यानां प्रसादेन निरामया वयम् । तत्रत्यआत्मीयनिरामयवार्ताभिः प्रत्यहं वयमानन्दनीयाः । अपरं पूज्यैरुपदिष्टमार्गे देववन्दनप्रतिक्रमणस्वाध्यायादिधर्मानुष्ठानरताः वयं कालमधिगच्छामः । अन्यच्च । पूज्यैः प्रसादं विधाय कलिकालकल्मषकलुषिताः वयं विमलसद्धर्मलाभवारिणा सत्वरमिहागत्य प्रक्षालनीयाः । पुस्तकोपकरणादिप्रयोजनेन यत्कृत्यादेशोऽनन्तरं प्रसादीकार्यः ।

## आचार्यः श्रावकस्य प्रस्थापयति लेखं यथा—

C & D स्वस्ति । श्रीवीरजिनमानम्य अमुकस्थानात् प्रभुश्रीअमुकसूरिचरणकमलाः सपरिवाराः अमुकस्थाने देवगुरुपूजनप्रतिक्रमणस्वाध्यायादिधर्मानुष्ठाननिरतान् सन्न्यायोपार्जितवित्तपरितोषितार्थिजनान् अमुकामुकप्रभृतिश्रावकान् श्राविकाअमुकाप्रभृतिसमुपेतान् कलिकालकल्मषमषीप्रक्षालितवारिणा सद्धर्मलाभेनाभिवन्द्य सबहुमानमादिशन्ति एवम् । आदेष्टव्यमि[illegible] । तदेवं निरामया वयं सपरिवारास्तिष्ठामः । तत्रत्यस्वीयकुशलवत्या वार्तया अनवरतं वयमानन्दनीयाः । अपरं रामारतैरपि इहपरलोकसुखसम्पदोघजनके सद्धर्मानुष्ठाने प्रतिदिनमुद्यमो विधेयः ।

धर्मादेवाप्यते स्वर्गस्तस्माद्धर्मं समाचरेत् ।
धर्मादेवाप्यते सम्पत् धर्मात् सुखफलोदयः ॥

## माहेश्वरयोग्यविज्ञप्तिका—

C & D स्वस्ति । अमुकस्थाने अनवरतक्रियमाणवेदाध्ययननिर्मलीकृतमानसान् अष्टादशस्मृतिपुराणादिधर्मकथाशास्त्राभ्यासनिरतान् गहनज्योतिःशास्त्रावगततत्त्वान् दुष्टग्रहशाकिनीभूतमुद्गलोच्चाटनमन्त्रवादपरिस्फुरणावाप्तपरमप्रसिद्धीन् हरमुरारिब्रह्मप्रभृतीष्टदेवताराधनसक्तान्तःकरणान् पूज्यपरमाराध्यतमोत्तमपरमपूजार्चनीयभट्टारकश्रीअमुकपादान् अमुकस्थानात् सदाज्ञाविधायी शिष्यः अमुकाकः क्षितितलनिहितोत्तमाङ्गेन साष्टाङ्गं प्रणम्य सविनयं विज्ञापयति यथा । विज्ञाप्यमाह । पूज्यपाददत्तआशीर्वादानुभावतः समस्तमानुषाणां कुशलवार्तामवधार्य तत्रत्यात्मीयकुशलवती वार्ता मम सन्तोषाय निरन्तरं प्रसादीकार्या । अपरं च । पूज्यपादानामतीव समुत्कण्ठितं स्वीयदर्शनामलजलेनागत्य कलिमलावलिप्रक्षालनपूर्वं मदीयमङ्गं निर्मलीकरणीयम् । तथा पर्वद्वयात्मनः प्रभृति सुकृतकल्पना तथा चीर्णव्रतोपायनकं समेत्य स्वयं प्रतिग्राह्यम् । यत्कृत्यादेशोऽनवरतं प्रसादीकार्यः ।

## गुरुः शिष्यस्याशीर्वादं प्रस्थापयति यथा—

C & D स्वस्ति । अमुकस्थानात् आचार्यअमुकाकः अमुकस्थाने अनवरत सद्धर्मानुष्ठानपयःप्रक्षालितकलिमलकलंकं सन्न्यायमार्गप्रवृत्तं वरगुणगणालंकृतशरीरमायुष्मन्तं शिष्यअमुकाकं वेदचतुष्टयोक्ताभिराशीर्भिरभिनन्द्य सबहुमानमाशीर्वादयति यथा । आशीर्वादार्थोऽयम् ।

कुशलमत्रास्माकम् । तत्रत्यात्मीयकुशलवती वार्ता अनवरतं मार्गेण अपरं च । प्रतिदिनं प्रातरुत्थाय शुचिर्भूत्वा भवता स्वरूपं द्रष्टव्यम् । देवपितृतर्पणाग्निद्विजात्यतिथीनां पूजा करणीया । तथा पितृमातृस्वसृज्येष्ठभ्रातृप्रभृतिबन्धुजनशुश्रूषा चानवरतं करणीया । दुःस्थावस्थितभागिनेयदौहित्रादिपोष्यवर्गावज्ञा च न करणीया । विद्वज्जनारविन्दनिर्गच्छद्धर्मशास्त्रमधुरसास्वादलालसमधुपेन भवितव्यम् । साधुजनसंसर्गः सदा विधातव्यः । सन्न्यायोपार्जितवृत्तौ च मानसमाधेयम् । किं बहुना । यत्कर्म इह परलोके हितं तदनुष्ठेयमिति ।

कुंकुमपत्रिका यथा—

C अमुकस्थानात् महं०अमुकाकः अमुकस्थाने यथाज्ञातिसम्बन्धं अमुकाकमामन्त्रयति यथा । अस्मदीयसुतस्य अमुकमासि अमुकतिथौ अमुकवारे अमुकाकस्य अमुकया सुतया पाणिग्रहणं भविष्यति इति मत्वा भवद्भिः सकुटुम्बैरत्रागन्तव्यम् ।

स्वामिलेखो यथा—

B & D स्वस्ति । यथास्थाने दुःस्थावस्थितजनाधारानवरतगुणगणोपेतानाश्रितजने यथोचितवृत्तिविभागान्निजगुणगणासादितराजलोकान्तःप्रभावान् पूज्यपरमाराध्यनमोत्तमठाकुरअमुकपादानमुकस्थानात्सदादेशकारी अमुकः क्षितितलनिहितमौलिना साष्टांगं प्रणम्य सविनयं विज्ञापयति यथा । विज्ञपनीयमिदम् । पूज्यैरादिष्टशिक्षापनया व्यापारमहं कुर्वंस्तिष्ठामि । पूज्यानां प्रतापेन सत्वरमारब्धप्रयोजनानां सिद्धिर्भवति । यदुक्तम् ।

शाखामृगस्य शाखायाः शाखां गन्तुं पराक्रमः ।
यत्पुनस्तीर्यतेऽम्भोधिः प्रभावस्तु प्रभोर्हि सः ॥

इत्यादि अपरं च । अत्र शिक्षापनाव्याजेन पूज्यपादानां नमस्करणाय तत्रहामागच्छामि लग्नः स्तोकदिनानां मध्ये । अत्रस्थानिवृत्तिः कस्मिन्नर्थे न विधेया । यदि किमप्यत्र च मया विनश्यति, तदा पूज्यैः परीक्षा मम कृतापि नैव इत्यवधार्य सर्वदा ममोपरि प्रसादो विधेयः । यत्कृत्यादेशोऽनवरतं प्रसादीकार्यः ॥

भृत्यलेखो यथा—

पिशुनप्रवेशः स्यात् । न मन्दप्रतापेन भवितव्यम् । सावष्टंभतया व्यापारणीयम् । तत्रत्यं व्यापारस्वरूपमनवरतमाख्येयमिति ॥

## मित्रलेखो यथा—

B & D स्वस्ति । यथास्थाने विद्वत्त्वदाक्षिण्यौदार्यादिवरगुणगणालंकृतशरीरं परमप्रेमवत्सलं वयस्यममुकममुकस्थानादमुकः सोत्कण्ठं सस्नेहं सांजसं दूरप्रसारितबाहुभ्यां गाढमालिङ्ग्य कुशलं वार्तयति यथा । कार्यं च । कुशलमिहावगम्य तत्रत्यस्वीयकुशलवार्ताऽस्माकं धृतयेऽनवरतं प्रहेया । अन्यच्च । यद्दिनपूर्वं त्वया सह मम वियोगः समजनि तद्दिनपूर्वं भवत्स्मरणकावृतमनसो मे न बुभुक्षा न पिपासा न निद्रादीनि च सुखानि वर्तन्ते । त्वया सह क्रीडितदिवसानि स्मृत्वा सखेदं मनः संपद्यते । इति मत्वा लेखदर्शनादेव यदि चित्ते धारयसि तदा शीघ्रं प्राघूर्णकेन समागन्तव्यम् ।

उक्तं च—

ददाति प्रतिगृह्णाति गुह्यमाख्याति पृच्छति ।
भुङ्क्ते भोजयते चैव षड्विधं प्रीतिलक्षणम् ॥

इत्यादि । अन्यत् । सर्वगुह्यस्थानकं मित्रं वर्तते, यद्विना कस्य हृद्गतानि सुखदुःखानि कथ्यन्ते ॥

तथा चोक्तम्—

सो को वि नत्थि सुयणो जस्स कहिज्जंति हिययदुक्खाइं ।
आवंति जंति कण्ठे पुणोवि हियए विलिज्जंति ॥

इत्यादि । कार्यप्रयोजनमनवरतमाख्येयमिति ॥

## प्रसन्नभार्या भर्तृलेखं प्रस्थापयति यथा—

B & D स्वस्ति । यथास्थाने शान्तदान्तादिवरगुणोपेतान् दुःस्थानाथबन्धुकुटुम्बिकवर्गाधारान् भर्तृअमुकपादान् अमुकस्थानात्सदाज्ञाविधायिनी अमुका सस्नेहं सोत्कण्ठं सविनयं विज्ञपयति यथा । कार्यं च । कुशलमत्र सर्वमानुषाणाम् । स्वीयशरीरारोग्यवती वार्ताऽनवरतं प्रसादीकार्या । अपरं च । युष्मत्प्रदर्शितमार्गानुसारेण गतायातस्वजनजनस्य तथा पोष्यवर्गस्य चित्तमनुरञ्जयमानाऽनुदिनं तिष्ठामि । तथा गृहक्षेत्रकणादिविषये कृतसारा तद्विकरणेऽहोरात्रमपि कृतोद्यमा तिष्ठामि । अत्रत्यावसेरी काचिन्न कार्या । अन्यत् । तत्र यद्यपि स्वीयगुणैर्युष्माकं सर्वः कोऽपि गौरवं करोति, अतो यूयं

सुखेन तिष्ठत । तथाप्यत्र ममानिर्वृतिर्वर्तते । तथा बालानामपि युष्मदीया महत्यवसेरी वर्तते । तत्रत्यप्रयोजनानि निष्पादयित्वा शीघ्रमिहागन्तव्यमिति ।

## संरुष्टभार्याभर्तृलेखो यथा—

B & D स्वस्ति । अमुकस्थाने भर्तृअमुकपादान् अमुकस्थानात् अमुका सादरं वार्तयति यथा । कार्यं च । सर्वमानुषाणां कुशलमस्ति । तत्रत्यात्मकुशलवार्ता प्रहेया । अन्यच्च । यतस्त्वं गतस्ततस्तव पाश्चात्यगृहदारापत्यादिकं सममपि विस्मृतम् । तव यत्रैव चट्टनं तत्रैव पत्तनम् । त्वया गच्छता यच्छंबलं मुक्तं तच्चार्धमासं यावत् तव गृहे निर्यातम् । ग्रहणकानि अड्डाणकानि मुक्त्वा उद्धारप(प्रो)द्धारादिना दिनानि निर्गमितानि । साम्प्रतमपत्यैः सह महत्कष्टं वर्तते। यदि भर्तृत्वमनवरतं महिलायाः कस्याश्चिछियते ततोऽत्रागन्तुं न शक्नोषि । बालकस्य व्यापादनेन गोहत्यादिकं पापं भवति । कुटुम्बकस्यापि सारां कर्तुं युज्यते इति परिभाव्य निष्ठुरहृदया यदि सा मुत्कलयति तदा साराकरणायागन्तव्यं, नो वा शम्बलं प्रहेयम् । यद्येतच्छीघ्रं न करिष्यसि तदाहं त्वदीयं गृहादिकं परित्यज्यापत्यान्यादाय पितृगृहं यास्यामि । इति मत्वा यत्तव सुखावहं स्यात्तदनुष्ठेयमिति ।

## गुप्तप्रियायाः प्रियस्य लेखो यथा—

B & D स्वस्ति । अमुकस्थाने विनिर्जितमकरध्वजलावण्यानौत्सुक्यौदार्यसौभाग्यादिगुणगणापहृतयुवतिमानसान्वल्लभअमुकपादान् अमुकस्थानात्सदादेशकारिणी अमुका सस्नेहं सोत्कण्ठं गाढमालिङ्ग्य साश्रं विज्ञपयति यथा । कार्यं च । कुशलमत्र । तत्रत्यात्मीयकुशलताकिंवदन्तीभिरनवरतमहमानन्दनीया । यद्दिने युष्माकं विजययात्रा जाता तद्दिनपूर्वं विरहदुःखानलेन तप्यमानमानसा रात्रिन्दिवं सौख्यं क्वापि नानुतिष्ठामि ।

तथा चोक्तम्—

> विरहहुयासकरालियह कहि पिययम कहिं जंप ।
> जाव न रइरसि विमलि जलि पेमदहि किय झंप ॥

इत्यादि परिभाव्य ममोपरि दयां धृत्वा बहून्यपि प्रयोजनानि मुक्त्वा अत्रागत्य निजदर्शनामृतवर्षेण विप्रलम्भपावकदह्यमानं मदीयमङ्गं निर्वापणीयम् । कालक्षेपो न कर्तव्यः ।

## भार्यालेखो यथा—

B & D स्वस्ति । अमुकस्थाने पालितपरमपतिव्रतगुणशालिनीमवगता-स्मद्भवनसकलनीतिमार्गां त्रिवर्गफलसम्पादयित्रीं विनयवात्सल्यादिप्रियंवदा-दिवरगुणगणावर्जितसकलनिजजनमानसां भार्यामसुकां सस्नेहं साञ्जसं सब-हुमानं कुशलं वार्तयति यथा। कार्यं च । कुशलमिहास्माकम् । तत्रत्यसमस्तमा-नुषाणां कुशलवती वार्ता प्रहेया । अस्माभिरागच्छद्भिर्या शिक्षापना प्रदत्ता तया शिक्षया भव्यगत्या गृहं परिपालनीयम् । यथा गतायातकुलटिकाप्रभृ-तिजनो बहिरप्रसिद्धिं नारोपयति तथानुष्ठेयमिति । यद्गृहे कुसूत्रं भवति तद-स्माकमिह निरूपणीयम् । अस्माभिरत्र प्रयोजनानि कृतानि, कियन्त्यकृतानि विद्यन्ते । अतोऽस्माकं विलम्बः । समग्रप्रयोजनानि सारयित्वा स्तोकदिनानां मध्ये वयमागच्छामो लग्नाः । अत्रत्यावसेरी न कार्या । यावद्वयमागच्छामस्ता-वद्गृहे यथा किमपि न विनश्यति तथा विधेयमिति ॥

## सरोषभर्तृभार्यालेखो यथा—

B & D स्वस्ति । अमुकस्थानादमुको अमुकस्थाने भार्यामसुकां सादरं कुशलं वार्तयति यथा । कुशलमत्रास्माकम् । तत्रत्यसमस्तमानुषाणां कुशल-वार्ता प्रहेया । अन्यत् । तत्रस्थानाद्यः कोऽप्यागच्छति स सर्वो गृहस्य रावामेव करोति । यत्रापि वयं न भवामस्तत्रापि किञ्चिन्न भवति । यदस्माभिर्मासद्वि-त्राणां हेतोः शम्बलं मुक्तं तत्त्वया दिनैर्दशभिरष्टभिरेव निष्ठापितम् । पदे पदे वयं दग्धास्त्वया । परं तव दोषो नास्ति । अस्मदीयप्राक्तनजन्मनोपार्जित-दोषः । यदुक्तम् ।

पूर्वदत्ता तु या विद्या पूर्वदत्तं तु यद्धनम् ।
पूर्वदत्ता तु या नारी अग्रे तिष्ठति तिष्ठति ॥

अन्यत् । सर्ववारान् यद्वयं भणामस्तत्त्वं विपरीतं करोषि । किं बहुना । यत्तव कुलसदृशं तदनुष्ठेयमिति ।

## सानुरागः प्रस्थापयति प्रियालेखो यथा—

B & D स्वस्ति । अमुकस्थानादमुकोऽमुकस्थाने निजतनुकान्तिविनिर्जि-तप्रत्यग्रकनकभासं किसलयकोमलकरचरणां पूर्णेन्दुमण्डलसमाननां चकितह-रिणीशावनयनां रम्भास्तम्भसमानोरुयुगलां कलकण्ठैकरवां दृष्टिवागुराकृष्ट-कामिजनान्तःकरणहारिणीं कुन्दकलिकाकारदशनां सगर्ववनगजेन्द्रकुम्भोत्तुङ्ग-घनस्तनीं दयितामसुकां सोत्कण्ठं सस्नेहं निर्भरं गाढमालिङ्ग्य कुशलं वार्त-

यति यथा। कार्यं च । कुशलमत्रास्माकम् । तत्रात्मीयशरीरारोग्यवती वार्ताऽनवरतं प्रहेया। तदास्माभिरागच्छद्भिर्निर्भरमालिङ्ग्य यत्र दिने त्वं मुत्कलापिता तद्दिनपूर्वं रणरणकोपेतशून्यमनसां क्षुत्पिपासादिना चास्माकं सन्तापैकजनका वासरा व्रजन्ति ॥

यतः ॥ दससु वि दिसासु दीससि हिंडसि रत्थासु वससि मह हियए।
तुममयमिह सयलमिणं तुह विरहे मुद्धि पिच्छामि ॥

तथा चानेन प्रतिबोधयामि ।

सवणाण य कायव्वो होइ पिययमवत्ताओ।
संगहियपियकलेवर खिज्जसि रे हियय मा अहियं ॥

तथैवानुदिनं चिन्तयामि।

तद्दिनमिह किं भविता विरहानलजलदजलवर्षम् ।
यत्र तवामृतपूरं वदनं द्रक्ष्यामि मृगनेत्रे ! ॥

इति परिभाव्य यथा प्रवासे तस्कराः प्रेमसर्वस्वं समवयसो नापहरन्ति तथा विधेयमालम्बनम् । शीघ्रमागच्छामो लग्नाः । हृदयमध्येऽनवरतमेव त्वत्समा नास्ति । अत्रत्यानिर्वृतिर्न कार्या ।

## कनिष्ठभ्रातृलेखो यथा—

B अमुकस्थानादमुको अमुकस्थाने भ्रातृअमुकं सोत्कण्ठं सादरं सबहुमानं समालिङ्ग्य कुशलं वार्तयति यथा। कार्यं च । कुशलमस्माकम् । तत्रत्यात्मीयकुशलवार्ता प्रत्यहं प्रहेया। यावद्वयं समागच्छामस्तावत्सर्वमानुषाणां भव्यसारा सम्भाला तथा गृहक्षेत्रधनादीनां सारा सुन्दरा कर्तव्या। यदि मम दयिते परस्परं राटिं रटतस्तदा सामवाक्यैर्निवारणीये। कस्यापि पक्षो न विधेयः। ममाग्रे कार्यप्रयोजनं प्रतिलेखेनानवरतमाख्येयमिति ॥

## पूर्वोक्तपूज्यैर्विस्तरख्यापिसामान्यप्रतिपत्तिलेखो यथा—

B स्वस्ति। अमुकस्थाने व्य० अमुकामुकाभ्यां अमुकं सस्नेहं साग्रहं सोत्कण्ठं कुशलं वार्तयति यथा। कार्यं च । प्रयोजनवशाद्यदत्र बहवो दिना लगन्ते ततोऽस्मद्गृहे सारा रम्या कार्या। यदि मानुषाः सीदन्ति तदास्माकमुपरि उद्धार्यं यद्गृह्णन्ति तद्देयम् । वयमायाताः सन्तोऽग्रेतनोद्धारस्य साम्प्रतोद्धारस्य च सर्वं विशुद्धं करिष्यामः। साभिज्ञानमिदं यदस्माभिरागच्छद्भिर्गृहे गत्वा

व्यावृत्य युष्मत्पार्श्वाच्छंबले द्वादश द्रम्मा जगृहिरे । अनेन साभिज्ञानेन नान्यथा विधेयम् । कार्यप्रयोजनमनवरतमाख्येयमिति ॥

## अमुकपुरे मित्रं प्रति प्रस्थापयति लेखो यथा—

B अमुकां—

स्नेहाङ्कुरो नित्यमुपैति वृद्धिमन्योन्यसन्दर्शनवारिसिक्तः ।
वियोगदुःखार्ककराभिघातैर्यथा न शुष्येत तथा विधेयम् ॥

अमुकं—सो कोवि न जाओ कत्थवि कच्छवकुलाण मज्झम्मि
जस्स समप्पिय भारं कुम्मो निवसिउं वीसमइ ॥
जह सरसे तह सुक्के वि पयो वधरइ अणुदिणं विंझो ।
उच्छङ्गवुड्ढियं निग्गुणंपि गरुया निसिड्ढन्ति ॥
जह सो नीलकलावो पाउसकालम्मि पिंजरइ छूढो ।
संभरइ वणे रमिउं तह अह्म मणो तुमं सरइ ।
सो कोवि नत्थि सुयणो जस्स कहिज्जंति हियदुक्खाइं ।
हियआओ जंति कंठे कंठाउ पुणो नियट्टंति ।
ते दीहा चउरंगुला जे पइसरिसा आसि ।
हवडां दिणयरु अत्थमइ छट्टइ छट्टइ मासि ॥
गिरौ कलापी गगने च मेघो लक्षान्तरे भानुः जले च पद्मम् ।
इन्दुर्द्विलक्षः कुमुदोत्पलानि यो यस्य हीष्टो न स तस्य दूरे ॥

सकृदपि यत्प्रतिपन्नं०

वरं प्राणपरित्यागो न वियोगो भवादृशाम् ।
प्राणा जन्मान्तरेऽपि स्युर्न पुनस्त्वादृशो जनः ॥
न तद्दिनं न सा रात्रिर्न सा वेला न सा घटी ।
म्रियमाणो यदा स्नेहं न स्मरामि सुहृत्तव ।
सन्ति जलानि बहून्यपि देशे देशे सरित्सु विमलानि ।
तानि तुलां किमु बिभ्रति गङ्गाजलचुलुकमात्रस्य ॥

## पितृलेखः—

D स्वस्ति । श्रीअमुकस्थाने पूज्यपरमाराध्यतमोत्तमपरमपूजार्चनीयपितृअमुकपादान् अमुकस्थानात्सदाज्ञाविधायी सुतअमुकः क्षितितलनिहितोत्तमाङ्गेन साष्टाङ्गं प्रणम्य सविनयं विज्ञापयति यथा । कार्यं च । समस्तमानु-

षाणां कुशलमत्र। तत्रत्यात्मीयकुशलवती वार्त्ता प्रसादीकार्या। अन्यच्च। पूज्यपादप्रदत्तशिक्षापनया गृहारम्भं कुर्वंस्तिष्ठामि। तथा पूज्यपादानां गुरुतराज्ञाप्रभावतः कृषिकर्मकरादिजनः सर्वोऽपि कर्मण्यधिकतरसमुद्यमपरो वर्तते। कृत्यादेशोऽनवरतं प्रसादीकार्यः।

## पुत्रलेखः—

D स्वस्ति। श्रीअमुकस्थानात् अमुकस्थाने विनयावनतइत्यादिवरगुणजनिताशेषजनानन्दमायुष्मन्तं पुत्रममुकं सोत्कण्ठं सस्नेहं गाढमालिङ्ग्य कुशलं वार्तयति। कार्यं च। कुशलमत्र। तत्रत्यात्मीयसमस्तमानुषाणां कुशलवार्त्ता सततं प्रहेया। अपरं च यावद्वयमागच्छामः तावत्समस्तगृहप्रयोजनविषयेऽप्रमादिना भवितव्यम्।

## मातृलेखः—

D स्वस्ति। श्रीअमुकस्थाने परममातृवात्सल्योपेतान् प्रियालापयथोचितगौरवकरणावर्जिताभ्यङ्गचित्तान् पूज्यतममातृअमुकापादान् अमुकस्थानात् सदादेशकारी चरणसेवकअमुकः साष्टाङ्गं प्रणम्य सविनयं विज्ञापयति यथा। कार्यं च। पूज्याभिः प्रदत्ताशीःप्रभावतोऽहमिह कुशलेनैव वर्त्ते। प्रतिदिनं प्रसादकार्यं कुर्वंस्तिष्ठामि। तत्रत्यसमस्तमानुषाणां कुशलवार्त्ता स्वगृहस्वरूपकथितवार्ता च प्रतिदिनं प्रसादीकार्या। यावदहं समागच्छामि तावत्समस्तप्रयोजनेषु पूज्याभिरप्रमादिनीभिर्भवितव्यम्।

## श्वशुरलेखः—

D स्वस्ति। अमुकस्थाने पूज्यतमश्वशुरपादान् अमुकस्थानात् सेवकअमुकाकः सविनयं विज्ञापयति यथा। कुशलमत्र। तत्रत्यकुशलवती वार्ता प्रसादीकार्या। अपरं च। युष्मदीया दुहिता अमुकाख्या अमुकपतिं मानयति तथा विधेयमिति।

## श्वश्रूलेखः—

D स्वस्ति। अमुकस्थाने पूज्यश्वश्रूअमुकापादसरोजान् अमुकस्थाने सेवकअमुकाकः सादरं विज्ञापयति यथा। कार्यं च। कुशलमत्र। तत्रत्यापि कुशलवती वार्ता प्रहेया। अन्यत्। युष्मदीयदुहितुः समानयनाय आत्मीयलघुभ्राता वेलाद्वयं त्रयं प्रहितः। परं केनाऽपि कारणेन भवतीभिः स्वदुहिता न मुत्कलिता। किं श्वश्रूननान्द्रादिभ्यः स[illegible]तमसुखकारणम्, आहोस्विन्मदीय-

पराभवदर्शनकारणं वा। तत्रानया कथयित्वा भवतीनां चित्तखेदः समुत्पादितः। सत्यमेवैतत्। तदपि चित्ते न धारणीयम्। मा दूहयित्वा मुत्कलनीया। अहमागच्छामि।

जामातृलेखः—

D स्वस्ति। श्रीअमुकस्थानात् अमुकः अमुकस्थाने श्रे०अमुकं वरगुणगणालङ्कृतशरीरं प्रियं वरजामातृकं सस्नेहं साश्रुसं गाढमालिङ्ग्य कुशलवार्त्तां कथयति यथा। कार्यं च। कुशलमत्रास्माकम्। तत्रत्यात्मीयकुशलवार्त्ताऽस्मत्सन्तोषायानवरतं प्रहेया। अपरं च अस्माभिस्तावद्दुहितरं दत्वा भवता सर्वारम्भेणापि तत्कर्तव्यं यथा अस्माकं सर्वप्रयोजनेषु संपत्तिः संपद्यते। तथा अस्मदीयपुत्रिकाऽज्ञतयाऽभीक्ष्णं सन्मुखीभूत्वा दुर्वाक्यप्रत्युत्तरदानेन समादिष्टादेशाकरणेन वा श्वश्रूननान्द्रादिलोकस्य सन्तापमुपपादयति तत् सर्वं सहनीयम्। अपरं च।

अपकारिषु यः साधुः स साधुः सद्भिरुच्यते।
उपकारिषु यः साधुः साधुत्वे तस्य को गुणः॥

# APPENDIX I

## भूमिविक्रयपत्रम्

ॐ। स्वस्ति श्री सवंत् १५८३ वर्षे ( श्री )गूर्जरधरित्र्यां सकलरा-(जावली)समलङ्कृतप्रौढप्रताप(सकल)रिपुवर्गदहनदावानलअरिकुलवरूथिनीग-( जघटाकुं )भस्थलविदारणैकपञ्चानन( महारा)जाधिराज( पातमाह)श्रीश्री-श्रीश्रीश्रीबाहदरसाहसंज्ञे श्रीअहिमदावा( दसमी )पस्थराजपुरे कदायाधिकारे कादीश्रीशेखफरीदसंज्ञे तथा पञ्चदीवानाधिका( रे मु )खते मीरकोई को(टपा)-लमण्डपिकायां सर्वव्यापारे खानश्रीमुखते( सकल )तलार व्यापारे महं कान्हा नाकरसंज्ञे सा × × य मी० चिरजीसंज्ञे तथा पञ्चकुलप्रति(प)त्तौ दायकग्राह-कयोर्वचनात् विक्रीयमाणायाः भूमेः पत्रमभिलिख्यते। पूर्वं दायकग्राहकयोर्नाम लिख्यते। दायकवृद्धसज्जने सोनी लहूआ आसा, लाडण ( आसा ), सङ्घा आसा, काशी रणायर आसा × × × ग्राहक परी० आसा सूदा, रवा सूदा, विण्हू सूदा, जादव दमा सूदा, लाखा नगा सूदा, सारण कसा सूदा, श्रीब-हूआ। सो० लहूइ, लाडणइ, शंघइ, काशीइ, उत्पन्न(का)र्यवशातु आपणी भूमि साह सामलना पाडामध्ये हूती ते भूमि राज्यटंका ८०४ आंक आठ-सई चिरोत्तर माटइ वेचाती परी० आसा रवा जादव, लाखा, सारणनई आपी सही। ते भूमी परी. आसाइ रवाइ विण्हूइ विण्हूइ जादव ( इ ) लाखइ सार-णइ आपणइ कबजी करी द्राम एक मूठिं गिणी आप्या सही। ते द्राम सो० लहूइ लाडणइ शंघइ काशीइ आपणइ जमणइ हाथिं संभाली लीधा सही। पूर्व पश्चिम श्रे० कसा अबा वनाना कहरलगइ गज १६ तथा उत्तर दक्षिण दालीया लाडण जीवा ( गांगा ) महिराजनी एकढाली पछीतथी वाट सूधा गज ३५। एवं जमलई सर्व थै गज ५६० अंके पाञ्चसइ साठि पूरा। अथा-घाटाः। पूर्वं श्रे० कसा अबा वनानूं फलीह। दक्षण दालीया लाडण जीवा गांगा महिराज। पश्चम परी० वृमा आसा सूदानूं* फलीह। उत्तर हींडवानु मार्ग शेरीनु। तथा एवंविधा भूमिः परी० आसा रवा विण्हू जादव लाखा सारण आचन्द्रार्कं मोक्तव्या। लहूआलाडणशंघाकाशीदास संबन्धो नास्ति। ए भूमिनई कीवई को दावु करई तेहनई लहूआ लाडण शंघा काशी प्रीछ-वई। प्रवृत्तकानि साक्षणः

अत्र मतं

सो० आसा सुत लहूआ मतं सोनी आसा सुत लाडण मतं सो० आसा सुत शंघा मतं सोनी रणायर सुत काशी मतं चारि

श्रीदीवान अमरखां श्रीफकर नसरखान तलार राजपोर अमल अजारि मी० राहाता × जणा दास खत १ एक ८०४ आठ शि टंका चारि भूम तो × × लाखित सोनी लहूआ लडण संघा सोनी आसा सुत सो० वीसा खरीद परीख आशा र ( वा ) विण्हू लाखा जादव संवत् १५८३ माहा शु० ९ बु ( ध ) तेरीख १०

---

## ग्रहणकपत्रम् ( गृहाड्डाणकपत्रम् )

स्वस्ति श्रीनृपविक्रमार्कसमयातीत—संवत् १५ आषाढादि ९९ वर्षे शाके १४६५ प्रवर्त्तमाने ज्येष्ठवदि ११ भूमे अद्येह श्री अहिमदावादवास्तव्य—ग्रहणकपत्रमभिलिख्यते । श्री गुर्जरधरित्र्यां समस्तराजावलीसमलङ्कृत—सकलअरिवरूथिनीगजघटाकुम्भस्थलविदारणैकपञ्चानन—अलक्षवरलब्धराज्यश्री स्वयंवरमालालङ्कृतकण्ठकन्दल—यवनकुलतिलक—महाराजाधिराज—पातसाहश्रीश्रीश्रीश्रीश्रीसुरत्राणमहिम्मुदविजयराज्ये विजारत्यां श्रीअफजलषांन । तत्समये राजा अहिमदावादमध्ये धर्माधर्मविचारणार्थे कादीश्री नसीरदीसंज्ञे न्यायवृक्षपालनैकमुषते दुर्गपाल श्रीअफतिषालमलिकसंज्ञे मीरकोअसाध श्रीपीरोज मलिक जामति मण्डपिकायां श्रीनगदलमलिक हवेल्यां मी० नूरदी मी० जलाल एवं पञ्चकुलप्रतिपत्तौ ढींकूए पटिलहाजानामध्य(नामधेय)पोलि तत्र मोदी जसा सुत मोदी सारण तत्पुत्र नराइणदास परं मोदी हादासुत तापीदासकेन ग्रहं ग्रहणके दत्तानि । ग्राहकनाम श्रीश्रीमालीज्ञातीयपरीक्ष हावडसुत प० हांसां तत्पुत्र ३ पद्मा-उदयकरण-रङ्गाकेन गृहीत्वा यत् राज्यनाणके टंका ८००४ अङ्के आठसहिस्र चिडोत्तर बधत्रसुपरीक्षत(ढत्रिःसुपरीक्षित) एकमुष्ट्यानि दत्तानि । डुढीऊ १ नवूं टंका ६ लेषइं अङ्के छ लेषइ । घर ग्रहणे । घर षडकीबध मध्य उपवर्ग २ गोखारि २ पटसालि प्राङ्गणसहित सन्मुख छापरूं पक्केष्ट वलीषा-प-नलीया-बारत-

कमाड सहित षडकीबध ग्रहणे मूक्यां । मोदी नाराइणदास तापीदास एणई मूंक्यां । भाइ ३ सहा पदमा उदयकरण रङ्गा कहई मूक्यां । पार्श्वे उत्तरइ मोदी धनासुत समधर सायरनां घर । पार्श्वेपूर्वे मोदी तापीदास नाराइ-णदासना घर । दक्षणे षडकी । तत्र अग्रे पाटिकामार्गे । एवं ४ घूंट । ए घर पडई आखडई राजकि दैवकि लागई ते तथा नलियाखोटि धणी छोडवतां सर्व वरती आपई । संचरामणी वसनाहारनी । जां लगइ टंका आठसहिस्र चिडोत्तर आपइ तिह्वारइं छुटइ । तां लगइ भाइ ३ पदमा रंगा उदयकरण वसइ वासइ । बन्धी अवधि वरिष ५ नी । वरिष पाञ्च पछी छोडवइ । वलती ए मास १ प्रति टं० २५ वलइ । वरिष १ ना टंका ३०० वलइ । घर भाडुं नहीं । द्राम व्याज नहीं । षालपरनालनीवाखादिक पूर्वारीति सम्बन्ध । मोदी नारायणदास तापीदासे घरग्रहणे प० पदमा प० उदयकरण रङ्गा कहइ मूक्यां । अस्य लषितविधे परिपालनाय ।

पछई एहिवूं परठ्युं । टंका ३०० वरस १ ना वलई । ओरडा बि मध्य भागला ते बेहू प० पदमा प० उदयकरण रङ्गाना ॥

अत्र मतं । अत्र साखि ।

१ मोदी हादासुत तापीदास मतं ऊपर लीखते ( आशरे २८ साक्षी छे )

परमाण

१ मोदी शरणदास सुत नाराणदास मतं

---

## विभङ्गपत्रम्

संवत् १६१८ वरषे जेष्ठ वदि ६ रवउ अद्येह नटपद्रथानमांहा श्रीमुदाफरविजेराजै वापारी मलिक श्रीसिरफहेदि मलिक अमीपीर पंचकुलप्रतिपत्तौ दोसी केसव दो० सागा दो० सोमजि जोग लिखितं नरसंग वीरा हरिजि देवजी । जत घरा हाट मालकति दो० ३ बिसी वेची आपी सही । ओ विखिणा रलीआत घटी कीधी । घर जूना दो० जनाना तथा नवा खरीदा श्री जिवाना तथा फली १ पट०जिभाईना खरीद तथा हाट ३ ओ मलकीते सरवा वेची लीधी दो० जनाना जूना घरमांधे भाग त्रीजे हती आ गोपालनां छि तो वेची आपयां । तथा कोटडी काढतां बीजूं कांई खरच खराजत थिसी तौ मजमू अरधे अरधी आपीई सही । तथा बीजूं सर्व हाटनूं लुगडू तथा सरवाईउ करी ऊघराणू देवू तथा हेम रूपू करडी सूखडी तथा बीजू जे

कांई हतुं तौ सर्व प्रीछी वींची लिधुं सही । दो० ३ बिसी सरव प्रीछवणी करी विंची आपू । आजसुधा नरसंग वीरा हरिजि देवजि तथा केसव सागा सोमर्जी ओ जणा सघलो बेसी प्रीछाविशी जूजूआ थया । ओहनि माहेमहि कहिनी सरसमांध नहिं । सरव प्रीछी जूजूआ थया । दो० ३ बिसी सघला प्रीछवी विंची आपू । ओहनी माहेमहि तलावे पाणी सहीआरे नही तथा नरसंग वीरा हरिजि देवजि ओ सरव विंची साटी जूजूआ थया । ओहनी कांई माहेमहि सरसमांध नही । तलावे पाणी सहीआरे नही । तथा केसव सागा सोमजिनि माहेमहि विंची सही जूजूआ थया । ओहनि माहेमहि सरसमंध नही । तलावि पाणी सहीआरे नही । तथा ऊघराणी जूनी पूजमूनी छि तो जिम आवि तिम अरधे अरधि लि । बिजू भोम दो० जनावाली राणा वणा एमना पासे छे बीजे पासे पडोस दवे नाग जोर्गादासना पासे छे । बीजू भोम नवा गाममाहेली तलीआनी छे ते काही भरमपोरे आपी । बाकी छे ते अजमाल छे । उघराणी तथा भोम मजमू छे । बाकी काई ए वरा केहीने कसू सरसमंध नही । ए वेहेचण दो० ३ बिसीने समजावा जोईने भाग जोए मलकत आवी ते मलकत तेहनी । ए लखू फेरवे ते तेहेना बापनो जणो नही । आज सूधी कोईनि केईसू कसो अलाखो नही । तलाव पाणी सहीआरो नही । ए लखू परमाण ।

## विभङ्गपत्रम्

ॐ श्रीगणेशाय नमः । संवत् १७०८ वर्षे शाके १५७३ प्रवर्तमाने दक्षिणायने गते श्रीसूर्ये हेमन्तऋतौ महामांगल्यप्रदपौषमासे कृष्णपक्षे ६ षष्ठी भौमवासरे वेहेचणना नदावाषतपत्रमभिलीख्यते । अद्येह गुर्जरधरित्र्यां समस्तराजावलीसमलङ्कृतपरमप्रौढप्रतापपरिजनप्रतापसंशोषितारिगजघटाविदारणैक-(पञ्चानन)अन्यायवर्षोनर्षवमूलनौक(वृक्षोन्मूलनैक)समस्तविध्वंसनदरिद्रदावानलअगञनगञनरिपुराजमर्दनौकसकलराज्ञां शिरोमणी अभावतमारकुड (अभिनवमार्तण्ड)अवतार वाचाअवीचलसंग्रामगुणधीरदानेकवीरयुवनतुलकपातस्याहा श्रीश्रीश्रीश्रीश्रीश्रीश्रीश्री७अवलमुजफरसाहान्दी मेहेमद साहाबकराणसानी पातस्याहा श्रीशाहाजाहागाजीविजयराज्ये क्रियते । तत्र समये पातस्याहा श्रीलाहोरमध्ये असेषफलभृतां गुर्जरधृतां राज्यं कुर्वती नीसतं विजारितां षानश्री सादुलाषानसांझे तत्र समये पातस्याहाश्रीसमीपे तेन प्रभुणा त श्रीमुषात अहमदाबादनगरे हाकमहवाले पातस्याहाश्रीजीनो ज्येष्ठ पुत्र सुलतान दाराशकुर

